# काव्यप्रकाशप्रश्नोत्तरी



अध्यापकः सूर्यमणिरथः

# समर्पणम्

हे पूज्यपादजनकाशिषमाप्य तेऽत्र संसारकाननपथे चलतात्मजेन ।
प्रश्नोत्तरीं विरचितां चरणे प्रकाशस्योत्सर्गितां सुसरलां श्रमजां गृहाण ।



ॐ

कृष्णं वन्दे जगद्गुरुम्

# अभिमतम्

अध्यापक-श्रीसूर्यमणिरथशर्मणा प्रणीतां काव्यप्रकाशप्रश्नोत्तरीं कतिपयस्थलावच्छेदेनावालोकयं समशोधयञ्च। तदेव स्थालीपुलाका-न्यायेनावलोकितां संशोधितां चेमां प्रश्नोत्तरीमधिकृत्य सम्मन्ये यत्-कामं विद्वज्जनैकविमृश्यापूर्वाविमर्शाः प्रश्नोत्तर्यामस्यां माभूवन्, माभूच्च सुपोढाभाषा। तथापि शास्त्रपारावारपारङ्गत विद्वज्जनैरगम्यानां काव्यप्रकाशपङ्क्तीनामन्तेवासिजनैः सर्वथा दुरूहाणामाशयोद्घाटनार्थं भूयांसं श्रममङ्गीकृत्य तरुणाध्यापक महोदयेन प्रायशः अध्ययनाध्यापनापरम्परायामुपयुज्यमानानां तत्त्वानामुल्लेखनात् सोऽयं प्रश्नोत्तरी ग्रन्थो मुदितः प्रकाशितश्च। काव्यप्रकाश पङ्क्तीनां यथार्थतोऽक्षरार्थयोजना पुरःसरमुद्देशतस्तदा-कूतावकलनं चिकीर्षूणां अन्तेवासिनां भूयासमुपकारं विधास्यतीति दृढं विश्वसिमीति—

| १४-१-१९८४<br>तारिकायाम्<br>मकरसंक्रमणदिवसे। | अध्यापकः<br>**भागवतप्रसादत्रिपाठीशर्मा**<br>गृहीतविरामः साहित्यविभागीयवरिष्ठ-<br>व्याख्याता (सिनियर लेक्चरर्)<br>श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठस्य<br>पुरीस्थस्य |
|---|---|

# मन्तव्यम्

सांप्रतं भारतवर्षे वहुभिरालङ्कारिकै रचितेषु अलङ्कार शास्त्रेषु वाग्देवतावतारश्रीमम्मटभट्टरचितः काव्यप्रकाशनामालङ्कार ग्रन्थोऽन्यतमः। वहुभिः टीकाकृद्भिस्तस्य व्याख्या कृता। तथापि स दुर्वोधतां न जहाति। मनस्यायाति—

"काव्यप्रकाशो रचितोऽत्र वाण्याधृतावतारं खलुमम्मटेन
वाणीप्रसन्ना कविना स्तुतासीत् नायं प्रसन्नोऽस्ति वुधै स्तुतोऽपि।"

प्राचीनानां शास्त्रेष्वेव परमनिष्ठाभाजां कालो नाधुनावर्तते। यस्मिन समये ग्रन्थाभिप्रायजज्ञासा वलवत्यासीत्। साम्प्रतमध्येतॄणां साभिगम्याध्ययनं न दृश्यते। इमां परिस्थितिं दृष्ट्वा साहित्याचार्यो-पाधिकश्रीसूर्यमणिरथशर्म्मा एतत काव्यप्रकाशस्यप्रश्नोत्तरीपुस्तकं लिखितवान्। यद्यपि प्रकाशस्य प्रश्नकाठिन्यमुद्घाट्य नायमुत्तरितवान् तथाप्यल्पीयसाकालेन ग्रन्थं जिज्ञासूनामन्त्येवासिनां महते उपकाराय भवेदेत्तद्रचितप्रश्नोत्तरींपुस्तकं सरलपद्धत्या। सरलमार्गमनुसरन् जनः अवाङ्मनसगोचरमिष्टदेवमपि लभते। पुस्तकस्यास्य विद्वद्गोष्ठीषु साग्रहवहुलप्रचारः भवतु इति श्रीजगन्नाथ-देवस्य श्रीचरणे पार्थये इति।

पुरी
८-२-८४

श्रीपुण्डरीकाक्षमिश्रस्य। श्यामसुन्दर संस्कृत-महाविद्यालयात् लब्धावसराध्यक्षस्य, प्राप्तराष्ट्रपति-पुरस्कारस्य तथा अधुना श्रीजगन्नाथसंस्कृतविश्व-विद्यालयस्य साहित्यविभागेऽतिथिप्राध्यापकस्य।

# "मर्मोक्तिः"

काव्यप्रकाशः अलङ्कारग्रन्थेष्वन्यतमः। तस्य काठिन्यं सर्वजनविदितम्। "सन्ति काव्यप्रकाशस्य टीकाः गेहेगेहे, तथाप्येष दुर्गमः दुर्बोधश्च।" इति उक्तिः सत्या। छात्राः कथं स्वल्पीयसा श्रमेण काव्यप्रकाशस्य गूढतत्त्वानि जानीयु रिति विचिन्त्य मया इयं प्रश्नोत्तरी रचिता। अत्र प्रश्नाः तथा तदुत्तराणि च वर्तन्ते। अलङ्काराणां लक्षणानि उदाहरणेषु सम्यग् योजितानि।

दोषा अपि उदाहरणद्वारा प्रदर्शिताः। लक्षणाविचार-रसनिष्पत्तिविचार-गुणालोचादयः अतीवसरलसंस्कृतया गिरा उपनिबद्धाः। इयं छात्रेषु आदृता भविष्यतीति आशा।

"गच्छतः स्खलनं क्वापी"ति न्यायेन यदि कुत्रचित् दोषः भवेत् तर्हि क्षन्तव्योऽहमिति।

विनीत

लेखकः

ॐ

# काव्यप्रकाशप्रश्नोत्तरी

विकसिताशित पङ्कजसंगतं सरस सुन्दर वेद बचोऽन्वितम्
मुखचतुष्टयभूषितविग्रहं सुरहितं रहितं खलु कर्मणा । १
ललितया लतया परिशिलितमतनुनीलतनुं प्रियया मुदा
अतनुनन्दनमत्र सदाभजे कमलयाऽमलया मलयाऽनिले । २
पितृवनावन मानस मानसं मनसिजस्य मनोमलिनीकृतम्
मलसुतामलमालसुमालितं शशकलं सकलं सकलं कलम् । ३

प्रश्नः १- काव्यप्रकाशकर्तुर्मम्मटस्य देशकाल निरूपणं क्रियताम् ।

उत्तरम्- व्याकरणप्रमुखानेक शास्त्रज्ञवागदेवतावतारमम्मटभटः आलङ्कारिकेषु विशिष्टतम आसीदित्यत्र नास्ति लेशतोऽपि संदेहस्याव-काशः । अलङ्कारशास्त्रेषु अस्य काव्यप्रकाशः मुकुटायमानः । महामान्योऽयं कदा कं देशं स्वजनुषा समलंचकार इति अधुना विचारणीयम् ।

प्रायशः भारतीय विद्वांसः पुराकाले स्वपरिचयादिकं स्पष्टतया स्वरचित ग्रन्थेषु न ददति स्म । तद्ग्रन्थाध्ययनान्तरं

गवेषकाः गवेषणया यत्किञ्चित् निरूपयन्ति तदपि विवादग्रस्ततया सत्यमिति प्रकाशयितुं न पारयामः तथापि काव्यप्रकाशानुसारं समीचीनमेतत् यत् मम्मटः भोजराजानन्तरं आसीत् । यतः—काव्यप्रकाशस्य दशमोल्लासे उदात्तालङ्कारस्योदाहरणे—

"मुक्ताः केलि विसूत्र हार गलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थर चलत् बालाङ्घ्रि लाक्षारुणाः ।
दूराद्दाडिम बीज शङ्कित धियः कर्षन्ति केलीशुका
यद् विद्वद् भवनेषु भोजनृपतेः तत्त्यागलीलायितम्"

भोजनृपतिनामग्रहणात् मम्मटः तत्परवर्तीति सत्यम् । ऐतिहासिकानां मतानुसारं भोजस्य कालः । 995तम ख्रीष्टाब्दतः 1050तम ख्रीष्टाब्दं यावत् आसीत् । 1042तम ख्रीष्टाब्दे भट्टगोविन्द सुताय धनपतिभट्टाय महीसुराय भोजप्रदत्त दान पत्रं भोजस्य पूर्वोक्त कालं समर्थयति ।

माणिक्य चन्द्रात् मम्मटस्य प्राक्तनत्वमपि सूचितं भवति । काव्यप्रकाशस्य संकेत नामिकाटीका माणिक्य चन्द्र सूरिणा अकारि द्वादशख्रीष्टाब्दे । एतेन सुष्ठुतया प्रतिभाति यत् भोजमाणिक्य चन्द्रयोर्मध्यवर्तिनि काले मम्मटः आसीत् ।

**मम्मटस्य देशः**— मम्मटः काश्मीरदेशीयः इति आलोचकानां मतम् । धन्यासा काश्मीरभूमिः याखलु मम्मटमासाद्य कृतकृत्या । जैयट कैयट-वज्रट-उवट-ओवट-उद्भट-रुद्रट-घम्मट- कल्लट - भल्लट-

लोल्लटाल्लट नाम धारिणः सर्वे काश्मीर देशीयाः आसन् । अतः अयमपि नाम साहश्यात् काश्मीर देशीयः भवेत् । किञ्च काव्यप्रकाश-दर्पणस्य पञ्चमोल्लासे विश्वनाथ कविराजेन "रुचिङ्कुरु" इत्यत्र चिङ्कु पदं काश्मीरभाषायामश्लीलमिति मम्मटमतं प्रत्यपादि ।

काव्यप्रकाशस्य सुधासागराख्यटीका कर्तुर्भीमसेनस्य मतेन काश्मीरदेशीयेन मम्मटेन जैयटात्मजेन वाराणसीमागत्य शास्त्राध्यय-नमकारि । अपिच पातञ्जलमहाभाष्यटीकाकारकैयटः, बेदभाष्यकार उवटः अस्य द्वौ सहोदरौ आस्ताम् । उवटः मम्मटस्य भ्राता आसी-दिति प्रामाणिका विपश्चितः नाङ्गीकुर्वन्ति । यत् भवतुनाम मम्मटः काश्मीर देशीयः । काव्यप्रकाशस्य परिकरालङ्कारं यावत् अनेनकृतम् शेषभागः अल्लट सूरिणा संपादितः ।

**प्रश्नः २- ग्रन्थारम्भे मङ्गलाचरणस्यावश्यकतां तथा "नियतिकृतनियमरहितामिति पद्ये कविसृष्टे-राधिक्यं प्रतिपादयत् ?"**

उत्तरम्— ईश्वरविश्वासि-भारतीयालङ्कारिकादीनां परम्परा-मतमिदम् ।

यत् यदि कार्यारम्भे भगवन्नाम ग्रहणं स्यात् तर्हि निर्विघ्नेन कार्य्य समापनं स्यात् । अतः ते आदौ भगवत् स्तुतिं विदधति । अत्र मनसि स्वतः प्रश्नः समुदेति ये खलु आङ्ग्लोकवयः ग्रन्थारम्भे मङ्गलाचरणं न कुर्वन्ति तेषां ग्रन्थाः किमु विघ्नविहताः सन्तः समाप्ति

न प्रयान्ति ? अथवा एवाधिक मङ्गलाचरण विधानेऽपि कथं वाणस्य कादम्बरी गद्यकाव्यं असमाप्तं जातम् ? तर्हि मङ्गलाचरणेन कोलाभः ! परन्तु एतत् न वक्तव्यम् । इहपरलोक विश्वासिनां भारतीय कवीनां परंपरास्रोतः इदम् । पूर्वार्जितसुकृतवशात् आङ्ग्लोकवीनां मङ्गलाचरणरहितानि काव्यानि समाप्तानि भवन्ति निर्विघ्नेन परन्तु पूर्वसुकृतरहितत्वात् वाण.काव्यमसमाप्तं जातम् ।

"आशीर्नमस्क्रियावस्तु निर्देशात्मकेभ्यः त्रिविधेभ्यः मङ्गलाचरणेभ्यः अत्र ग्रन्थकृता नमस्कारात्मकं मङ्गलाचरणं कृतम् । श्लोकेऽस्मिन् मम्मटः प्रतिपादयति यद्यपि ब्रह्माण्डस्य निर्मातृत्वेन ब्रह्मालब्धप्रतिष्ठः, तथापि तदपेक्षया कवेः सृष्टिः उन्नततरा ।

"नियतिकृतनियमरहितां ह्लादैकमयी मनन्य परतन्त्राम्
नवरस रुचिरां निर्मितिमादधती भारती कवेर्जयति ।"

इति श्लोके विशेषण चतुष्टय द्वारेण आचार्य्यः प्रमाणयति, नितरां कविसृष्टेराधिक्यं ब्रह्मसृष्टितः वर्तते । तत्रादौ—

**नियतिकृतनियमरहिताम्**—नियम्यन्ते सौरभादयः धर्मा. यया सा नियति, नाम असाधारणधर्मः । तत्कृतेननियमेन रहिताम् । अर्थात् यत्र यत्र मल्लीकादिपुष्पत्वं तत्र तत्र सौरभत्वम् । अयं तावत् नियति कृत नियमः । नियमेनानेन ब्रह्मसृष्टिर्वद्धा । परन्तु कविसृष्टिः एतत् रहिता । कविः कान्ता मुखं पद्मेन साकं तुलयन् तत्र नासा वायुं सुरभित्वेन प्रमाणयति ।

यत्रयत्र वह्नित्वं तत्र तत्र उष्मत्वम् परन्तु कविः विरहिविरह वेदनां अग्निपीडयासमं प्रतिपादयन् नियतिकृतनियमोपरि स्वकाव्य-साम्राज्यं स्थापयति। अतः इयं कविसृष्टिः वन्द्या।

**२- ह्लादैकमयीम्—** ब्रह्मसृष्टौ दुःखसुखयोः मिश्रणं दृश्यते। यदा संपदागमनं भवति तदा सुखस्य प्राबल्यं अपिच विपदागमने-दुःखस्य बाहुल्यं जनानां जायते। परन्तु विचारयन्तु भवन्तः कवि-सृष्टेः केवलं आनन्दस्य राज्यम्। नविद्यतेऽत्र दुःखस्य सत्ता जनाः नितरां काव्यनाटकश्रवणदर्शनेन असीममाप्नुवन्ति सुखम्। ये केचन करुण रस नाटक दर्शनेन दुःखोदयः भवतीति वदन्ति ते अतात्पर्य्यज्ञाः यतः जनाः करुणरसपरिपूर्णं नाटकं द्रष्टुं बहुश्रमोपार्जतार्थं व्ययं कुर्वन्ति। नहि कश्चित् आत्मनः दुःखाय कदापि प्रवर्तते। अस्मात् दुःखसुखपूर्णा ब्रह्मसृष्टितः केवलं सुखपूर्णा कविसृष्टिः अधिकतरा। अतः संततमेव कविसृष्टिर्वन्द्या।

**३- अनन्यपरतन्त्राम्—** न अन्यस्य परतन्त्रा (पराधीना) यासा अनन्य परतन्त्रा। अर्थात् कविसृष्टिः न पराधीना। यदा कविः किञ्चित् लिखितुं इच्छति तदा सः काव्यादिकं कर्तुं पारयति। परन्तु ब्रह्मसृष्टि. न एतादृशी। तत्र समवाय्यादि कारणत्रयस्य आवश्यकता नूनं वर्तते। अस्मादुक्तं ब्रह्मसृष्टिः कारणत्रय परतन्त्रा। परन्तु कविसृष्टिः नान्यस्य परतन्त्रा। पराधीनापेक्षया स्वाधीनस्योत्कर्ष-योगात् कविसृष्टेः आधिक्यं सर्वजनविदितम्। अतः सा वन्दनीया।

**४- नवरसरुचिराम्—** कविसृष्टि: शृङ्गारहास्यादिभिः नवसंख्यक-रसैः मनोहरा वर्तते। एते सर्वरसाः हृद्याः। परन्तु ब्रह्मसृष्टिः कट्वम्ललवणादिभिः सड्भीरसैः युक्ता वर्तते। एते अपि सर्वे न हृद्याः। अस्मात् संख्यादृष्ट्या समधिका तथा आस्वादनदृष्ट्या सर्वास्वादनत्वात् ब्रह्मसृष्टितः कविसृष्टिः प्रशस्यतरा।

एवम्भूता कविसृष्टिः जयति, अर्थात् सर्वोत्कर्षेण वर्तते। एतेन (जयतिपदेन) व्यञ्जनावादिनः मम्मटस्य नमस्कारः आक्षिप्यते। श्लोकेऽस्मिन् "उपमानात् यदन्यस्य व्यतिरेकः स एव सः" इति लक्षणानुसारं व्यतिरेकालङ्कारः व्यङ्ग्यः।

अत्र उपमानभूता ब्रह्मसृष्टिः, उपमेयभूता कविसृष्टिः।

**प्रश्नः-३— काव्यस्य प्रयोजनं मम्मटोक्तदिशासमालोचयत ?**

उत्तरम्-इह संसारे नैवम्भूतः कश्चन जनः वर्तते यः प्रयोजनमन्तरा कस्मिन् कर्मणि प्रवृत्तः भवति। अस्मात् सूक्तिरियम्—

"प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" समीचीना। अत्र विचारयामः काव्ये किन्तावत् प्रयोजनम्। मम्मटानुसारम्—

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतर क्षतये
सद्यः परनिर्वृतये कान्तासम्मिततया उपदेशयुजे।"

अर्थात् काव्यं यशोनिमित्तं, अर्थागमनाय, व्यवहारज्ञानाय, अमङ्गल विनाशाय, श्रवणमात्रेऽपारानन्दाय तथा कान्तासम्मितवचनद्वारेण सदुपदेशप्रदानाय अलं भवति। एतदपि सिषाधयिषुः ग्रन्थकारः आदौ यशः प्राप्तिं प्रतिपादयति।

**यशसे** - सर्वजनमनोरञ्जककाव्यं विरचय्य प्राप्नुवन्ति कवयः विमलं यशः, कविसंसारे सर्वजनविदितस्य कालिदासस्य तथा तदनन्तरं सम्भूतानां दण्डिभारविमाघादीनां काव्यानि भृशं पठित्वा पाठकाः समर्पयन्ति प्रशंसाम् ।

**अर्थकृते**– न केवलमिदं यशः अपितु काव्यनिर्माणेन काव्यकर्तारः लभन्ते अर्थमजस्रम् । प्रवादो वर्तते पुरा धावकनामा महाकविः रत्नावलीनाटिकां श्रीहर्षनाम्ना विलिख्य लेभे बहूनि धनानि । भारविरपि "सहसा विदधीत न क्रियाम्" इति माघोऽपि "कुमुद वनमपश्री" (माघ एकादशसर्गस्थ श्लोकं) इति विलिख्य बहुमर्थराशिं प्राप्तवान् । अधुना अपि साहित्यिकाः ग्रन्थान् विलिख्य साहित्य-एकाडेमीपक्षतः तथा राष्ट्रपति सकाशात् आसादयन्ति अर्थेन साकं प्रशंसापत्रम् । पुरी नगरे "सुनिआँ" इति पर्वदिने मठाधीशाः श्लोक-रचयितृभ्यः अर्थं ददति । रवीन्द्रनाथठाकुरोऽपि स्वगीताञ्जलि सकाशात् नोवेल् पुरस्कारं(Noble Prize) लब्धवान् । अतः काव्यं अर्थागमनाय ।

**व्यवहारविदे**– व्यवहारस्य वित्, तस्मै व्यवहारविदे । राज्ञि कथं व्यवहरणीयं मुनिसचिवेषु कथं आचरणीयं इति काव्यानुशीलनेन सम्यक् ज्ञायते । अतः काव्यं व्यवहारज्ञानाय अलं भवति ।

**शिवेतरक्षतये**—काव्यद्वारेण अमङ्गलस्य विनाशो जायते । एतदपि महामान्यः मम्मटः प्रतिपादयति यत्— पुरा मयूरनामा महाकविरासीत् । सः भगिनी अभिशप्तः सन् कुष्ठरोगेण पीडितः अभवत् । गङ्गाकूले सूर्यशतकं रचयित्वा तस्मात् दुःसाधरोगात् मुक्तः जातः । अधुना अपि जनाः अमङ्गल नाशाय धर्मपुस्तकपाठं कुर्वन्ति । अस्मात् कारणात् काव्यं शिवेतरक्षतये इति समीचीनम् ।

**सद्यः परनिर्वृतये**— यदि केनचित् वृक्षरोपणं विधीयते वा कि
यागादिकार्यं तर्हि विलम्बेन तत्फलमासाद्यते तेन। परन्तु काव्
श्रवणात् परं अथवा दृश्यकाव्यदर्शनात् परं जनाः सद्यः प्राप्नुव
अपारमानन्दम् अत्र सहृदयाः प्रमाणम्। काव्यस्य प्रयोजनविषये 'स
परनिर्वृतये" इति मम्मटमतं सुसङ्गतम्।

**कान्ता सम्मिततया उपदेशयुजे**— शब्दस्तावत् त्रिविधः। प्र
सम्मितः, सुहृत्सम्मितः, कान्तासम्मितश्चेति। वेदादिशास्त्रा
प्रभुसम्मितत्वेन व्यवह्रियन्ते। यथा प्रभुरादिशति—इदं कुरु, इदं
कुरु, तथा वेदादिशास्त्राणि आदिशन्ति। पुराणेतिहासादीनि शास्त्रा
सुहृत् सम्मितत्वेन विदितानि। यथा मित्रं मित्रं प्रति कर्तव्य
कर्तव्यविषये उपदिशति तथा एतानि उपदिशन्ति। कान्तासम्मि
त्वेन काव्यनाटकानि विदितानि। यथा कान्ता सुमिष्टवचनं उक्त्व
स्वप्रियं स्वाभिमुखं करोति तथा काव्यानि अपि सरसतां प्रतिपा
रावणकंसादिवत् नाचरणीयं सर्वदा रामकृष्णवत् आचरणीयमि
उपदिशन्ति।

एतत् प्रयोजन—सम्मिलितकाव्यं कथं नानुसर्तव्यम्?

अस्माकं मतानुसारं काव्यस्य प्रयोजनमिदं यत्—

"असारे खलु संसारे कियद्दिनं जिजीविषुः।
प्रशंसितो भवेल्लोकैः काव्ययोगादिहापि ना"

भामहमतेन— "धर्मार्थ काम मोक्षेषु वैचक्ष्यण्यं कलासु च
करोति कीर्तिं प्रीतिं च साधु काव्यनिषेवणम्"

विश्वनाथानुसारम्—

"चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि
काव्यादेत्रयतस्तेन तत् स्वरूप निरूप्यते,' इति विस्तरेणालम्

प्रश्नः ४- "इतिहेतुस्तदुद्भवे" इति दलस्याशयं विचारयत ?

उत्तरम्— "कौति" इति कविः कु "शब्दे" इति धातोः "अच इ" पाणिनि सूत्रेण कविशब्दस्य निष्पत्तिः । कवेः कर्म काव्यम् । केनचिदुच्यते यदि कवेः कर्म काव्यं तर्हि अवगाहनावसरे कविः यत् वस्त्रप्रक्षालनं करोति तत् कर्मत्वेन तत्काव्यं भवतु ?

परन्तु तन्न समीचीनम् । कवि शब्दस्य व्युत्पत्ति ज्ञानानन्तरं दुर्भावनेयं दूरी भविष्यति । (उपरि या व्युत्पत्ति कृता तदनुसारम्)

हेतुर्नाकारणं बीजमिति अमरशासनानुसारेण हेतुशब्दस्यार्थः कारणम् । कारणेन विना कार्य्योत्पत्ति नैव सम्भवेत् । अत्र काव्यरूप कार्य्याय किं कारणमिति चेत्— तत्रोच्यते—

"शक्तिर्निपुणता लोक शास्त्र काव्याद्यवेक्षणात्
काव्यज्ञ शिक्षयाभ्यास इति हेतुस्तदुद्भवे"

मम्मटवचनानुसारं शक्तिः, लौकिकवृत्तान्त शास्त्रकाव्याद्यवेक्षणात् दक्षता, तथा काव्यज्ञशिक्षयाभ्यासः, इति त्रितयं काव्यस्य हेतुत्वेन विदितम् । अत्र कवित्व बीजरूपः संस्कार विशेषः, शक्तिः, । अनया शक्त्या विना काव्यं कदाचिदपि न प्रसरेत् । अतः उक्तम्—

"नरत्वं दुर्लभं लोके, विद्यातत्रसुदुर्लभा
कवित्वं दुर्लभ तत्र शक्तिस्तत्रापि दुर्लभा"

छन्दो व्याकरण कोषादीनां ग्रन्थानां भूयोभूयोभ्यास वलेन या दक्षता, तथा ये खलु महान्तः पण्डिताः सन्ति तषां सकाशात शिक्षानुसारं योऽभ्यासः, एतत् सम्मेलनेन कश्चित् काव्य करणायालं भवति ।

अस्माकं पुरतः सांप्रतं ये केचन कालिदास भारविदण्ड्याद्य-स्तथा उत्कलीयाः कवयः कविसम्राडुपेन्द्रभंजगंगाधर मेहेर-यदुमणि-राधानाथादयः विभ्राजमानाः सन्ति, ते सर्वे एतत् शक्ति त्रितयस्याधि-कारिणः आसन् । काव्यहेतु विषये केवलं प्रतिभामङ्गीकुर्वाणानां आलङ्कारिकाणां मध्ये भामहस्य मतमिदम्— 'काव्यं तु जायते जातु कस्यचित् प्रतिभावतः" पण्डितराजमतेन— "तस्य च कारणं कविगता केवला प्रतिभा । सा च काव्यघटनानुकूला शब्दार्थोपस्थितिः ।"

आनन्दवर्धनस्यमतेन—

"सरस्वती स्वादु तदर्थ वस्तु निस्यन्दमाना महतां कवीनाम्
अलोक सामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ।"

रुद्रटस्यमतम्— "मनसि सदा सुसमाधिनि विस्फुरणमनेकधाभिधेयस्य
अक्लिष्टानि पदानि विभ्रान्ति यस्यामसौ शक्तिः"

विश्वनाथस्य मतम्— नरत्वं दुर्लभं लोके . शक्तिस्तत्रापि दुर्लभा"

(अ:पु.)

अस्मन्मतेतु "भगवत् प्रसादः एव सर्वस्य हेतुः" एवं प्रति पूर्वजन्मनि कृतं कर्म कारणम्। ... "स्वकर्म सूत्रैर्ग्रथितोहिलोकः"

अत्र पङ्क्तौ हेतुरिति एकवचनव्यवहारः समीचीनः। यतः शक्त्यादित्रितयं दण्डचक्रन्यायेन अत्र सन्निवेशितम्। नतृणारणिमणिन्यायेन। यथा तृणारणिमणिभ्यः एकस्योपादानेऽपि अग्निसम्भवः तथा शक्त्यादिषु एकस्य कस्यचित् उपादानेऽपि न काव्यसम्भवः। अतः दण्डचक्रादीनां सहयोगेन घटादिनिर्माणवत् शक्त्यादि योगेन काव्यनिर्माणम्। एतेषां मिथः मिलनेन हेतुरिति एकवचनं युक्तियुक्तम्।

**प्रश्नः-५—काव्यप्रकाशकृत काव्यस्वरूपं अन्यकाव्यस्वरूपात् गुरुतरं वा न इति निर्णयत ?**

उत्तरम्—काव्यस्य किन्तावत् स्वरूपमिति समुज्जृम्भमाणे प्रश्ने मम्मटस्य मतं यत्—

"तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि"

अर्थात् उद्देश्यप्रतिबन्धकत्वं दोषत्वम। अनेन दोषेन रहितौ, गुणयुक्तौ तथा सालङ्कारौ वा स्फुटालङ्कारविहीनौ शब्दार्थौ काव्यम्। विश्वनाथ-मतेन न एवम्भूतं काव्यं वर्तते यत्र नास्ति दोषः। तर्हि कथं तत्र काव्यत्वं स्यात् ? अतः अदोष इति पदं न दातव्यम्। परन्तु तत् न युक्तम्। मम्मटस्यायमेव गूढाभिप्रायः यत् ये खलु च्युतसंस्कारादयः प्रबलदोषाः उद्देश्य विघातकाः सन्ति तैः रहितौ शब्दार्थौ काव्यं स्याताम्।

न केवलमेतत् अपितु गुणसहितौ शब्दार्थौ काव्यम् । यद्यपि मम्मटानुसारं गुणाः रसधर्माः ( ये रसस्याङ्गिनोधर्माः शौर्यादय इवात्मनः ) तथापि गौणभावेन ते शब्दार्थ धर्माः । ( गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ) अपिच स्फुटालङ्कारयुक्तौ वा अस्फुटालङ्कारयुक्तौ शब्दार्थौ काव्यं भवतः । अस्फुटालङ्कारस्य उदाहरणप्रसङ्गे उदाहृतं मम्मटेन —

'यः कौमारहरः स एवहिवरास्ता एव चैत्रक्षपा-
स्तेचोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः
साचैवास्मितथापि तत्र सुरत व्यापारलीलाविधौ
रेवारोधसि वेतसी तरुतले चेतः समुत्कण्ठते"।

अत्र श्लोके यद्यपि "हरोवरः" इति अनुप्रासो वर्तते तथापि तत् शृङ्गार प्रतिकूलतया न स्फुटालङ्कारत्वमर्हति । ध्वनिकारोक्तदिशा—

"शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धवान्
सर्वेषु एव प्रभेदेषु नानुप्रासः प्रकाशकः" प्रतिषिद्धत्वतः ।

यद्यपि "क्रियायाः (कारणस्य) प्रतिषेधेऽपि फलव्यक्तिर्विभावना" इत्यनुसारं अत्र वराद्युपभोगाभावरूपस्य कारणस्याभावे उत्कण्ठारूप कार्यस्य उत्पत्ति कथनात् विभावनालंकारः । अपिच "विशेषोक्ति-रखण्डेषु कारणेषु फलावचः" इति लक्षणानुसारं अत्र उपभुक्तत्वरूपस्य कारणस्य विद्यमानत्वेऽपि उत्कण्ठारहितत्वरूपस्य कार्यस्य अभाव कथनात् विशेषोक्तिः, तथापि निषेधवाचकनञादि-अनुपादानात् न स्फुटमेतौ प्रतिभातः । एतयोरस्फुटत्वात् एतन्मूलकसन्देहसंकरोऽपि अस्फुटः । "अस्मि" इति क्रियापदयोगात् विभक्तिविपरिणामेन

क्रियादीपकं भवतु !! तदपि न युक्तम् यतः "अस्मि" इति अहमर्थकं अव्ययं अतः क्रियादीपकमपि अस्फुटम्। रसस्य प्राधान्यात् रस ध्वनिरेव नतु रसवदलङ्कारः अत्र वतते। अनेन प्रकारेण न कोऽपि अलङ्कारः स्फुटतामायात्यत्र। तथापि अस्मिन् श्लोके न काव्यत्वहानिर्भवति।

यद्यपि काव्यं पठितं श्रुतं गीतं रचितमिति व्यवहारात् शब्दे काव्यत्वं तथापि काव्यं कठिनं बुद्धमिति अर्थेऽपि काव्यत्वम् सत्यामपि विवदमानायामस्यां परिस्थितौ आचार्य्य मम्मटः उभयोः पक्ष स्वीकृत्य शब्दार्थौ काव्यमिति प्रतिपादयति। यत्तु साहित्यदर्पणे कविराजेन वाक्यं रसात्मकं काव्यमिति उक्तम् तत् न रुचिरम् वस्तु-अलङ्कार, प्रधानकाव्यानामकाव्यत्वापत्तित्वात्। प्रबन्धरसेन एतेषां रसत्वमिति चेत् तर्हि तदपि अयुक्तम्। यतः "मृगोधावति" "गौश्चरति" कपिबालादिक्रीडन वर्णन प्रसङ्गेच प्रबन्धरसेन रसत्वं सम्भवेत् रसगङ्गाधरे पण्डित राजेन यदुक्तं—रमणीयार्थ प्रतिपादक-शब्दः काव्यमिति तदपि अयुक्तम्। यतः सः प्रत्यक्ष्यतया "शब्दः" काव्यमिति स्वीकृत्य परोक्षतया शब्दार्थौ काव्यमिति स्वाकरोति। उत्तमोत्तम काव्योदाहरणे सः प्रकाशयति— "शब्दार्थौ यत्र गुणी-भावितात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदाद्यम्" यदि सः शब्दार्थौ काव्यमिति न स्वीकरोति तर्हि अत्र कथं "गुणीभावितात्मानौ शब्दार्थौ" इति प्रकाशयति ? एवं यदि सर्वतोदिशा क्रियेत विचारः तर्हि मम्मटकृत् काव्यस्वरूप इतरकाव्यस्वरूपात् गुरुतरम्।

**प्रश्नः ६- मम्मटोक्त काव्य भेदान् सोदाहरणं दर्शयत ?**

उत्तरम् मम्मटानुसारं काव्यस्य भेदत्रयमस्ति । तत् यथा— उत्तमकाव्यम्, मध्यमकाव्यम्, अधमकाव्यम् । यत्र वाच्यार्थापेक्षया व्यङ्ग्यार्थस्य प्राधानं तत्र उत्तम काव्यम् । एतत् ध्वनिकाव्यमिति बुधाः वदन्ति । यथा—

"इदमुत्तममतिशयिनि व्यङ्ग्ये वाचात् ध्वनिर्बुधैः कथितः"

यथा— "निःशेषच्युत चन्दनं स्तनतटं निर्मृष्टरागोधरः-
नेत्रे दूरमनञ्जने पुलकिता तन्वि ! तवेयं तनुः ।
मिथ्या वादिनि ! दूति ! बान्धव जनस्याज्ञात पीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्"

अत्र पद्ये तस्यान्तिकं न गताऽसि इति निषेधरूप वाच्यार्थात् अधम पदस्योपादानात् तस्यान्तिकं गतासीति व्यङ्ग्यार्थस्य प्राधान्यात् इदं ध्वनिकाव्यम् ।

मध्यमकाव्यम्- "अतादृशिगुणीभूत व्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्" इति लक्षणानुसारं यत्र वाच्यार्थापेक्षया व्यङ्ग्यार्थस्य प्राधान्यं नास्ति उत वाच्यव्यङ्ग्योः समप्राधान्यं तत्र मध्यमकाव्यम् ।

वाक्यार्थापेक्षया व्यङ्ग्यार्थस्य न्यूनत्वे— "ग्रामतरुणं तरुण्या नव वञ्जुल मञ्जरी सनाथ करम् । पश्यन्त्या भवति मुहुर्नितरां मलिनामुखच्छाया" अत्र वञ्जुल मञ्जरी युक्त हस्त नायकं विलोकयन्त्या नायिकायाः मुखमालिन्यं जातमिति वाच्यार्थः । अस्मादेव वाच्यार्थात् संकेतमदत्त्वा कार्य्यवशात् केलिवनं नायिका न गता इति व्यङ्ग्यार्थस्या प्राधान्यात् मध्यम काव्यम् ।

वाच्यार्थव्यङ्ग्यार्थयोस्तुल्यप्राधान्ये—

"ब्राह्मणातिक्रमत्यागः भवतामेव भूतये
जामदग्न्यस्तथा मित्रयन्यथा दुर्मनायते"

अत्र यदि ब्राह्मणानामवमाननं स्यात्, तर्हि क्षत्रियाणामिव रक्षसां क्षयः परशुरामेण करिष्यते इति भयप्रदानरूतं व्यङ्ग्यं तथा सम्पत् विवर्धनार्थमुपदेशरूपवाच्यं तुल्यप्राधान्यत्वेन वर्तते। अर्थात् उभयोर्मध्ये समप्राधान्यमितिकृत्वा मध्यमकाव्यम्।

अधमकाव्यम्— यत्र व्यङ्ग्यार्थस्यावभासनं न स्पष्टतया भवति तत्र अधमकाव्यम्। "अव्यङ्ग्यं त्ववरं स्मृतम्" इदं काव्यं चित्रमिति बुधैर्व्यवह्रियते। यथा—

शब्दचित्रस्य— स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-
मूर्च्छन्मोहमहर्षिहर्षविहित स्नानाह्निकाह्लायवः।
भिद्यादुद्यदुदारदर्दुरदरी दीर्घादरिद्रद्रुम-
द्रोहोद्रेकमहोर्मि मेदुरमदामन्दाकिनी मन्दताम्।

अत्र श्लोके च्छकारदकारवर्णानां भूरिप्रयोगवशात् अनुप्रासस्य शब्दालङ्कारस्याडम्बरो मनोहरति। यद्यपि अन्य तीर्थस्थानेभ्यः गङ्गायाः पावनत्वाधिक्यात् व्यतिरेकालङ्कारस्य व्यङ्ग्यत्वे ध्वनि-सम्भावनास्ति तथापि अनुप्रासे कवेस्तात्पर्यात् सा तिरोधीयते। अस्मात् अस्फुटव्यङ्ग्यमिदं काव्यम्।

अर्थचित्रस्य—

"विनिर्गतं मानन्दमात्ममन्दिरात् भवत्युपश्रुत्य यदृच्छयापियम्
ससंभ्रमेन्द्र द्रुतपातितार्गला निमीलिताक्षीवभियामरावती"

उदाहृतेपद्ये "निमीलिताक्षीव" इति उत्प्रेक्षालङ्कारः वर्तते। यद्यपि हयग्रीवस्य वीरत्वं अत्र व्यङ्ग्यत्वेन वर्तते तथापि कवेस्तात्पर्याभावात् इदं न व्यज्यते स्पष्टतया। परन्तु श्रवणमात्रेण उत्प्रेक्षालङ्कारः सामाजिकानां मनः हरति। अतः इदं अर्थचित्रस्य उदाहरणम्। उत्प्रेक्षालङ्कारः अर्थालङ्कारान्तर्गतत्वात्।

**प्रश्नः ७- "तात्पर्य्यार्थोऽपि केषुचित्" इत्यस्य व्याख्या विधेया**

उत्तरम्— "स्याद्वाचकोलाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा" इत्यनुसारं साहित्यिका शब्दस्य उपाधित्रयमुररीकृत्य तदनुसार अर्थस्यापि (वाच्य, लक्ष्य, व्यङ्ग्यक्रमेण) आमनन्ति उपाधित्रयम्। परन्तु अभिहितान्वय वादिनः (भाटमीमांसकाः तात्पर्य्यार्थनाम्ना अर्थमेकं स्वीकुर्वन्ति। तेषां मतानुसारं योग्यता, आकाङ्क्षा, आसत्तिः इति त्रितय योगात् वाक्यस्य विशेष सम्बन्ध रूपार्थः तात्पर्य्यार्थः। अर्थात् पदानां परस्परसम्बन्धे बाधाभावः योग्यता। यदि, एकस्य पदार्थस्य अपरेण पदार्थेनसह यः सम्बन्धः सः बाधितो न भवति तर्हि स एव बाधाभावः योग्यतानाम्ना व्यपदिशते। यथा— "राम! अत्रागच्छ" इति वाक्ये पदानां मिथः बाधो न जायते अस्मादत्र योग्यतायाः अवसरः। "परन्तु वह्निना सिंचति" इति वाक्ये अथवा "जलेन ददति" इति वाक्ये सेचन क्रियायां वह्नेः तथा दहनक्रियायां जलस्य करणत्वेन अन्वयस्य असामर्थ्यात् न योग्यतायाः प्रसक्तिः।

एक पदार्थस्य इतरपदार्थेन साकं अन्वयापेक्षा, आकाङ्क्षा। सा च श्रोतुः (श्रवणकारिणः) जिज्ञासारूपा। यथा "देवदत्तः ग्रामम्" इति स्थले गच्छतीति क्रियापदं प्रति आकाङ्क्षा वर्तते यत्र तु आकाङ्क्षा न वर्तते यथा गौरश्वःपुरुषः हस्तीतिस्थले न वाक्यत्वम्। "आकाङ्क्षारहितं वाक्यंप्रमाणम्" इति योगात्।

योग्यताशालिनां— आकाङ्क्षितानां च पदार्थानां यदि अव्यवधाने अवस्थानं तर्हि तत्र आसत्तिः भवति। यथा इदानीं हरिहरः इति पदं उच्चार्य कालान्तरे यदि आगच्छति इति पदं उच्चार्यत तर्हि तत्र नासत्तिः येन इदं वाक्यत्वं नेयात्।

अयमत्र सारः यत् "रामचन्द्रः अरण्यमगमत्" इति वाक्ये योग्यताऽकाङ्क्षाऽसत्तीनां समन्वयः वर्तते। अत्र अभिधा "रामचन्द्रः" "अरण्यं" "अगमत्" इति पदानां स्वंस्वंअर्थं प्रकाशयति। एतानि पदानि यदा सम्मिलितानि भवन्ति तदा वाक्यार्थरूपः एकः विशेषार्थः प्रकाशितो भवति। अयं विशेषार्थः तात्पर्यार्थः। यया शक्त्या अयं वाक्यार्थरूपः विशेषार्थः प्रकाश्यते सा शक्तिस्तात्पर्यशक्तिः। भाट्टमीमांसकानामिदं मतम्।

**प्रश्नः ८- "सर्वेषां प्रायशोर्थानां व्यञ्जकत्वमपीष्यते" इति अशः प्रकाशकृता केनोद्देश्येन उपस्थापितः ?**

उत्तरम्— मम्मटानुसारं ( स्याद् वाचकोलाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ) न केवलं शब्दः व्यञ्जकः भवितुं अर्हति अपितु प्रायशः

सर्वेषां अर्थानामपि व्यञ्जकत्वं वर्तते । अत्र [1]प्रायशः इति पदस्य वैशिष्ट्यं इदं मत्— यद्यपि रसरूपार्थः व्यङ्ग्यार्थः वर्तते तथापि वस्त्वलङ्कार व्यङ्ग्यवत् तस्मात् रसरूपव्यङ्ग्यार्थात् अपरस्य व्यङ्ग्यार्थस्य उदयः न भवति ।

**वाच्यार्थस्य व्यञ्जकत्वम्—**

"मातगृंहोपकरणमद्यनास्तीति साधितं त्वया
तद्भण किं करणीयमेवमेवं न वासरस्थायी"

अत्रोदाहृतेपद्ये व्यभिचारिणीवदतीति वक्तृवैशिष्ट्यरूपवाच्यार्थात् (जननि ! आवश्यकानि द्रव्याणि अस्माकं गृहे न विद्यन्ते इति प्रागेः पर्यालोचितम् । अधुना अहं बहिर्गत्वा तानि आनेष्यामि, यतः सायंकालः सन्निकटः) इयं उपपति सङ्गमाभिलाषिणीति सहृदयैः बुध्यते व्यञ्जनया ।

**लक्ष्यार्थस्य व्यञ्जकत्वम्—**

"साधयन्ती सखि ! सुभगं क्षणे क्षणे दूनासिमत्कृते
सद्भावस्नेह करणीयसदृशकं तावत् विरचितं त्वया"

अत्र पद्ये नायिका कथयति "हे सखि ! मत्कृते त्वया अतीवकष्टं स्वीकृतम् । एतदेव तव साधु स्वभावस्य समीचीनं कार्यम् अयंताव वाक्यार्थः । अस्मात वाच्यार्थात् प्रत्यक्षविलोकित कृशत्वादि

---

(1) अर्थशक्त्युद्भवध्वनेः भेदकरणावसरे यथा वस्तुध्वनिः अलङ्कारध्वनेः अलङ्कारध्वनितः वस्तुध्वनेः व्यञ्जनं भवति न तथा वस्तुध्वनितः रसध्वनेः वा अलङ्कारध्वनितः रसध्वनेर्व्यञ्जनम् ।

प्रियोपभोगचिह्नयोगात् विपरीतलक्षणया मयि शत्रुत्वमाचरितमिति लक्ष्यार्थः । एतेन कामुकस्य दूती सम्भोगात् तद्विषयकापराध-प्रकाशनत्वं व्यज्यते ।

**व्यङ्ग्यार्थस्य व्यञ्जकत्वम्—**

"पश्यनिश्चलनिस्पन्दाविसिनी पत्रे राजते बलाका
निर्मल मरकतभाजनो परिस्थिता शंख शुक्तिरिव"

अत्र पद्ये काचित् उद्दामयौवनसन्नद्धा कामुकी स्वकामुकं ब्रवीति—"पुष्करिण्यामत्र पद्मपत्रे स्थिता काश्चित् वकयोषित मरकतस्थानो-परिस्थितां शङ्खसदृशीमवलोकय" इति वाच्यार्थः ।' अस्मात वाच्यार्थात् अस्य स्थानस्य भयहीनता व्यज्यते । (निश्चलनिस्पन्दा-पदयोगात्) अस्मात् व्यङ्ग्यार्थात् जनशून्यता अस्यस्थानस्य इत्यपि व्यज्यते अपिच इतः प्रागेव त्वया अत्र नागतमिति व्यङ्ग्यार्थस्य ज्ञानं भवति । उदाहृते पद्ये व्यङ्ग्यार्थात् व्यङ्ग्यार्थस्य उदययोगात् व्यञ्जकत्वमपि व्यङ्ग्यार्थस्य वर्तते । अतः सर्वेषां प्रायशोर्थानां व्यञ्जकत्वं अस्तीति यदुक्तं तत् ग्रन्थकृता अनेन समाहितम् ।

## प्रश्नः-९—"सङ्केतितश्चतुर्भेदो जात्यादि जातिरेव वा" इति अंशस्य कोऽभिप्रायः ?

उत्तरम्—सम् उपपद कित इच्छार्थकधातोः सकेतशब्दस्य निष्पत्तिः । अस्मात् शब्दात् अयमेवार्थः बोद्धव्यः इति संकेतः । शक्तिपादे गदाधरभट्टाचार्यैरुक्तम्— "इदं पदं इयमर्थं बोधयतु" इतीच्छा संकेतरूपा वृत्तिः । संकेतग्रहस्य एते उपायाः यथा—

"शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्यव्यवहारातश्च
वाक्यस्य शेषात् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः"

संकेतग्रहविषये मम्मटेन वैयाकरणानां मीमांसकानां च मतं जात्यादि, जातिरेव वा इति क्रमशः आधारीकृत्य प्रतिपादितम् । वैयाकरणानां मतेन जातिगुणक्रियायदृच्छादिषु व्यक्तेश्चतुर्षु उपाधिषु संकेतग्रहः साधीयान् । केचिन्निगदन्ति "गामानय" "गां नय" इतिस्थले व्यक्तिरागच्छति गच्छति च । अतः गो व्यक्तौ संकेतग्रहः करणीयः । परन्तु एतदसमीचीनमिति मम्मटस्य मतम् यदि गो व्यक्तौ संकेतग्रहः स्वीक्रियेत तर्हि आनन्त्य व्यभिचारत्वेन दोषद्वयागमः स्यात् ।

अयमेवानन्त्य दोषः यत्... यदि गोव्यक्तौ संकेतग्रहः स्यात् तर्हि समकालमेव पृथिवीस्थाः समस्ताः गावः एकी भवितुं नार्हन्ति । अतः आनन्त्यदोषः अयम् । व्यभिचारदोषायं यत्— यदि गो व्यक्तौ संकेतग्रहः स्यात् तर्हि यस्यां गोव्यक्तौ संकेतग्रहः कृतः तां विहाय अपरा गोर्व्यक्तिः बुद्धिपथं नागच्छेत् । अतः अत्र व्यभिचारदोषः ।

अतएव व्यक्तेः चतुर्षूपाधिषु (जातिगुणादिषु) संकेतग्रहः युक्तः इति वैयाकरणानां मतम् । चतुष्टयीशब्दानां प्रवृत्तिरिति महाभाष्यकारोक्तं द्रढयति एतत् ।

"सूत्रस्थ जातिरेव वा" इति मीमांसकानां मतेन केवल जातावेव संकेतग्रहः भवितुमर्हति । यतः हिमे दुग्धे पयसि शङ्खे यत् शुक्लत्वं वर्तते तत्र तस्य शुक्लस्य भिन्नत्वेपि जातिवर्तते शुक्लत्वम् । गुड तण्डुलशाकादिषु पाककार्येषु पाकस्य भिन्नत्वेऽपि तत्र पाकत्वं

जातिः । बालकवृद्धशुकादिभिरुच्चारितेषु शब्देषु उच्चारणभेदे विद्यमानेऽपि तत्र यतः सर्वत्र जातौ प्रवृत्तिकवृत्तित्वं विद्यते, अतः जातौ सङ्केतग्रहः भवितुं युक्तः । इति मीमांसकानां मतम् । परन्तु ग्रन्थकारः शब्दानां 'सर्वेषां जातिरेव प्रवृत्तिनिमित्तमिति अन्ये" इति अन्येशब्दं योययित्वा मीमांसकानां मतं विगणयन् वैयाकरणमतमङ्गी करोति ।

**प्रश्नः १०- संक्षेपतया उपाधेर्भेदनिरूपणं कर्तव्यम् ?**

उत्तरम्— संकेतग्रहः व्यक्तेश्चतुर्षूपाधिषु भवतीति सूचितम् । सांप्रतं के के ते उपाधयः इति प्रदर्श्यते । कोनाम उपाधिरिति समुजृम्भमाणे प्रश्ने,— उपाधिनामासाधारणगुणः" इति उच्यते । आदौ उपाधिः वस्तुधर्मः वक्तृयदृच्छासंनिवेशितश्च इति द्विविधम् । वस्तुनि (व्यक्तौ) ये समवेताः धर्माः (जातिगुणक्रियाः) ते वस्तु धर्माः अर्थात् व्यक्तौ जातिगुणक्रियाः सन्ति । एते वस्तुधर्मत्वेन व्यपदिश्यन्ते । अन्यः वक्तृयदृच्छासंनिवेशितः । अर्थात् डित्थडवित्थादयः शब्दाः । व्यक्तौ केनप्रकारेण जातिगुणक्रियाः सन्ति तदालोच्यते । सिद्धसाध्य भेदेन वस्तुधर्मस्य भेदद्वयं वर्तते । सिद्धस्यापि पदार्थस्य प्राणप्रदः विशेषाधानहेतुश्चेति भेदद्वयमस्ति । अनयोर्मध्ये पदार्थस्य (गवादेः) प्राणनं (व्यवहार योग्यतां) प्रददातीति पदार्थस्य प्राणप्रदः, जातिरेकः । द्वितीयः विशेषाधानहेतुः अर्थात् विशिष्यते नाम सजातीयेभ्यः कृष्ण-शुक्लादिभेदेन पृथक्क्रियते इति विशेषाधानः । अयमेवगुणः उच्यते । साध्यः (साधयितुं योग्यः) पाकादिक्रियारूपः । वाक्यपदीये भर्तृहरिणा उक्तम्—

"यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते"

एते जातिगुणक्रियारूपाः वस्तु (व्यक्ति) धर्मान्तर्गताः । अपरः द्रव्यरूपोर्थः (इच्छा) वक्तृ यदृच्छासंनिवेशितः । स च डित्थ-डवित्थ, रामहरि इत्यादिशब्दैः अभिधीयते ।




## प्रश्नः ११- अभिधालक्षणाव्यञ्जनानां स्वरूपं विलिख्य लक्षणां लक्ष्ये संगमयत ?

उत्तरम् – साहित्यिकाः वाच्यलक्ष्य व्यङ्ग्य भेदेन अर्थस्य भेदत्रयं स्वीकुर्वन्ति । एते अर्थाः यया शक्त्या प्रतीयन्ते सा शक्तिः अभिधा लक्षणा व्यञ्जना नाम्ना व्यपदिश्यते । अर्थात् अभिधया वाच्यार्थः लक्षणया लक्ष्यार्थः व्यञ्जनया व्यङ्ग्यार्थः बुध्यते ।

अभिधा— तत्र का नामाभिधा इति आकाङ्क्षायां मम्मटस्य आशयः अयमेव यत्— याशक्ति मुख्यार्थं प्रत्यनुकूला सा अभिधा । यथा— स मुख्योऽर्थस्तत्र मुख्योव्यापारोस्याभिधोच्यते । व्यवधानेन विना यः जात्यादिरूपं सङ्केतितमर्थं वोधयति सः वाचकः । अस्मात् वाचकात अभिधया वाच्यार्थस्य भानं भवति ।

लक्षणा— वाक्य श्रवणानन्तरं कुत्रचित्स्थले तात्पर्य्यानुपपत्तियोगात् एका शक्तिरङ्गीक्रियते रूढिं प्रयोजनं वा उद्दिश्य । साशक्तिलक्षणा । एतदर्थं हेतुत्रयमावश्यकम् । यथा मुख्यार्थबाधः मुख्यार्थयोगः, रूढिप्रयोजनयोरेकस्य सम्बन्धः ।

"मुख्यार्थ वाधे तद्योगे रूढ़ितोऽथ प्रयोजनात्
अन्योर्थः लक्ष्यते यत्सा लक्षणारोपिताक्रिया"

वक्ष्यमाणेवाक्ये कथं लक्षणा भवति तत् विचारयन्तु पाठकाः !—

"वङ्गोपसागरे पुरी" इति स्थले पुरी (प्रसिद्धश्रीक्षेत्रम्) वङ्गोपसागरमध्ये वर्तते इति मुख्यः अर्थः । परन्तु सागर मध्ये पुरी नगर्य्याः स्थितिरसम्भवा । अतः मुख्यार्थस्य वाधः जातः । सूत्रस्थ "तद्योगे" इत्यंशे शङ्का जायते, यत्र मुख्यार्थस्य वाधः तत्र कथं तस्य योगः ? सत्यमेतत् । यत्र सम्वन्धायोगात् मुख्यार्थस्य वाधः भवति तत्र तस्य योगः । अर्थात् तत्सम्बन्धिनः कस्यचिदर्थस्य योगः अनिर्वार्य्यः । नोचेत् वङ्गोपसागरे पुरी इति वाक्यात् आरवसागर कूले पुरीति ज्ञानं भवेत् । अतः "तद्योगः" पदेन मुख्यार्थ सम्बन्धीयः कश्चन अर्थः योक्तव्यः । अपिच लक्षणास्थले रूढिप्रयोजनयोरेकस्या-

वश्यकता अपेक्षणीया । अत्र सागरे पुरीति कथनात् शीतत्वं स्वास्थ्यकरत्वं पवित्रत्वं च प्रयोजनम् । "सागरस्तीर्थराजः" इति वृद्धवचनात् पावनत्वस्याधिक्य मप्यत्र प्रयोजनम् । एतत् हेतु त्रयस्य योगात् "वङ्गोपसागरे पुरी"ति. वाक्यात् सागर कूले पुरीतिलक्ष्यते । यथाशक्त्या अयमर्थः बुध्यते सा शक्तिर्लक्षणा । लक्षणाया प्रतिपाद्यार्थः लक्ष्यार्थः । आरोपिताक्रिया कथनेन ईश्वरानुद्भाबिता इति अर्थः आयाति ।

व्यञ्जना— "वंगोपसागरे पुरी" इति वाक्यात् मुख्यार्थज्ञानानन्तरं" वंगोपसागरकूले पुरीति लक्ष्यार्थः लक्ष्यते । यस्यनिमित्तं लक्षणायाः व्यवहारः तदेव व्यङ्ग्यम् । येनव्यापारेण व्यङ्ग्यस्य ज्ञानं भवति सः व्यापारः व्यञ्जना व्यापारः । यदुक्तम्—

"यस्यप्रतीतिमाधातुं लक्षणा समुपास्यते
फले शब्दैक गम्येऽत्र व्यञ्जनान्नापराक्रिया"

उदाहरणेऽस्मिन् पावनत्वं स्वास्थ्यकरत्वं व्यङ्ग्यम्, यया शक्त्या एतत् ज्ञानं भवति, सा व्यञ्जना इति मन्तव्यम् ।

## प्रश्नः १२- कर्मणिकुशल इति स्थले मम्मटानुसारं प्रतिपाद्या-लक्षणा विश्वनाथोक्तदिशा खण्डनीया ।

उत्तरम्— लक्षणा निमित्तं रूढिप्रयोजनयोरेकस्यावश्यकता वर्तते । रूढौ लक्षणायाः उदाहरणप्रसङ्गे "कर्मणिकुशल" इति मम्मटेनोदाहृतम् । मम्मटस्याशयः यत् कुशान् लातीति व्युत्पत्त्या

कुशग्राहिरूपोऽर्थः मुख्यः। परन्तु कर्मणि कुशग्राहीति अर्थस्यासमीचीनत्वतः मुख्यार्थस्य बाधः संजातः। अनन्तरं विवेचकत्वादि साधर्म्य सम्बन्धेन लक्षणया कुशल शब्दः कुशग्राहिरूप मर्थं विबोधयन् दक्षरूपार्थं प्रकाशयति। अस्मादत्र रूढ़िमूलिका लक्षणा।

परन्तु अष्टादशभाषावारविलासिनीभुजङ्गविश्वनाथः एतद् न स्वीकरोति। विश्वनाथस्य मतेन यद्यपि कुशलशब्दस्य कुशग्राहिरूपोर्थः व्युत्पत्तिलभ्यः तथापि दक्षरूपोऽर्थः तस्य मुख्यः। यतः शब्दस्य व्युत्पत्तिनिमित्तार्थप्रतीतिः प्रवृत्तिनिमित्तार्थप्रतीतिश्च भिन्ना वर्तते। अपिच व्युत्पत्तिलभ्योऽर्थः मुख्योऽर्थः इति यदि स्वीकरिष्यते तर्हि 'गौः शेते'' इत्यत्रापि गच्छतीति गौरिति व्युत्पत्त्या शयनकाले अप्रयोगात् नूनं लक्षणाऽङ्गीकार्या भवेत् एवं च सायकशब्दोऽपि ''षोन्तकर्मणि'' इति धातोः ण्वुल् प्रत्ययेन निष्पन्नः विनाशकालायोगेऽपि लक्षणया सायकपदं व्रजेत्। परन्तु एवं न भवति। यथा शयनकाले विनाशकरणाभावेऽपिच गोसायकशब्दौ लक्षणां विना गतिशायके च व्यवह्रियेते तथा कर्मणिकुशल इतिस्थले लक्षणां विना दक्षरूपोऽर्थः प्रतीयते।

**प्रश्नः १३— "लक्षणा तेन षड्विधा" इति सोदाहरणं प्रतिपादनीयम् ?**

उत्तरम्—इतः पूर्वमेव लक्षणाविषये आलोचितम्। मम्मटानुसारं सांप्रतं तद्भेदाः प्रदीयन्ते।

शुद्धागौणीभेदेन लक्षणा द्विविधा आदौ भवति। शुद्धालक्षणा

उपचाररहिता भवति । उपचारविषये उक्तं यत्— अत्यन्तपृथक् भूतयोः वस्तुनो अतिशयसादृश्यात् भेद प्रतीति स्थगनं उपचारः । यथा मुखे मुखत्वं वर्तते चन्द्रे चन्द्रत्वं वर्तते, परन्तु आह्लादादि योगात् "मुखचन्द्रः" इति उच्च्यते । उपचारमिश्रिता गौणी लक्षणा शुद्धा लक्षणा, उपादानलक्षणा, लक्षणलक्षणाभेदेन द्विविधा । एते द्वे (उपादानलक्षणा, लक्षणलक्षणा) सारोपासाध्यवसानाभेदेन द्विविधे । एवं साकल्येन शुद्धा चतुर्धा ।

उपादानलक्षणाविषये उक्तं . यत्र स्वसिद्धिनिमित्तं परस्य आक्षेपणं भवति तत्रोपादनलक्षणा अपि च परनिमित्तं यत्र स्वस्यार्पणं भवति तत्र लक्षणलक्षणा यथा "कुन्ताः प्रविशन्ति" इतिस्थले अचेतन कुन्तानां प्रवेशासम्भवात् कुन्तपदेन कुन्तधारि पुरुषाः आक्षिप्यन्ते । अतः अत्र उपादानलक्षणा "गङ्गायां घोषः" इतिस्थले गङ्गाशब्दः घोषसिद्धार्थं तटं प्रति आत्मानं समर्पयति । अतः लक्षणलक्षणा अत्र भवति ।

सारोपा साध्यवसाना लक्षणा विषये उक्तं यत्—

"सारोपान्यातु यत्रोक्तौ विषयीविषयस्तथा
विषय्यन्तः कृतेऽन्यस्मिन सा स्यात् साध्यवसानिका"

अर्थात् यत्र विषयी (गवादिः)विषयः (बाहीकादिः) सामानाधिकरण्येन वर्तते तत्र सारोपालक्षणा भवति । यथा श्रेण्यां बुद्धिमान्द्यादिदर्शनात् कञ्चनवालकं प्रति गुरुरुक्तवान् "गर्दभोवालकः" अस्माकमुत्कल-भाषायां यथा (एटा गोटे गधपिला) अत्र विषयी गर्दभः तथा विषयः वालकः सामानाधिकरण्येन वाक्ये व्यवह्रियते । अतः अत्र सारोपा लक्षणा ।

यत्र विषयिद्वारा विषयस्य निगरणं भवति, अर्थात् वालकादिः गर्दभपदेन लुक्कायितः भवति तत्र साध्यवासना लक्षणा यथा निर्दिष्टं वालमुद्दिश्य गुरुरुवाच—"गर्दभोऽयम्" अत्र अयं पदेन विषयः वालकः स्वतन्त्रतया स्वशब्देन अनुक्तः सन् गर्दभशब्देन (विषयिणा) उच्यते। अस्मादत्र साध्यवसाना लक्षणा।




शुद्धालक्षणा चतुर्धा यथा—

१- शुद्धा उपादानसारोपा— कुन्ताः पुरुषाः प्रविशन्ति।
२-शुद्धा उपादानसाध्यवसाना—कुन्ताः प्रविशन्ति, यष्टयः प्रविशन्ति।
३-शुद्धा लक्षणा सारोपा— आयुर्घृतम्
४-शुद्धालक्षणा साध्यवसाना— आयुरेवेदम्।

गौणीलक्षणा द्विविधा यथा—

१- गौणी सारोपा— गर्दभो वालकः, गौर्वाहीकः।
२- गौणीसाध्यवसाना... गर्दभोऽयम्, गौरयम्

इत्थमिलित्वा षड्भेदाः।

**प्रश्नः १४—प्रयोजनविशिष्टे लक्ष्ये लक्षणाकरणे का वाधा इति प्रतिपादयत ?**

उत्तरम् — "गङ्गायां घोषः" "कूपे गर्गकुलम्" ( गर्गनामकस्य गुरोर्गृहम्) 'भेकोऽपिवत् सागरम्' (अगस्त्यमुनिः) इति वाक्येषु यानि

यानि प्रयोजनानि वर्तन्ते तानि सर्वाणि व्यञ्जनया बुध्यन्ते । परन्तु कोऽपि वादी ब्रूयात् प्रयोजनबोधनाय व्यञ्जनायाः का आवश्यकता ? लक्षणा अपि तानि बोधयितुं समर्था इति चेत् न, यतः लक्षणानिमित्तं मुख्यार्थबाधादिकारणत्रयमावश्यकम् । व्यञ्जनास्थले मुख्यार्थस्य बाधो न भवति प्रत्युत व्यञ्जनानिमित्तं लक्षणासाहाय्यकारिणी भवति ।

उक्तञ्च— "यस्य प्रतीतिमाधातुं लक्षणासमुपास्यते
फले शब्दैक गम्येऽत्र व्यञ्जनान्नापराक्रिया"

मुख्यार्थबाधः कथं न भवति इति प्रश्ने—

"लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो
न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः"

अर्थात् यदि लक्ष्यार्थः मुख्यार्थः स्यात् तर्हि तत्र बाधः सम्भवेत् । परन्तु एतन्नभवति । 'गङ्गायां घोषः' इतिस्थले पावनत्वादयः यदि लक्ष्यार्थाः स्युः तर्हि तटस्य सम्बन्धो न सम्भवेत् । यतः पावनत्वादयः गङ्गायाः धर्माः न तटस्य । अनेन द्वितीयहेतुः (तद्योगः) निरस्तः । किञ्च प्रयोजनं चेत् लक्ष्यं स्यात् तल्लक्ष्यं प्रति नान्यत् प्रयोजनं विद्यते अतः तृतीयः हेतुर्निरस्तः । कारणत्रयाभावात् लक्षणायाः अवसरः कुतः ?

"भक्षितेऽपि लशुने न शान्तो गदः" इति न्यायेन वादी कथयेत् प्रयोजनमेव लक्ष्यं तर्हि अपरोऽपि दोषः आपतेत् । प्रयोजनविशिष्ट लक्ष्यार्थनिमित्तं अपरस्य प्रयोजनस्यावश्यकता वर्तते एवं पुनः पुनः तस्याः स्वीकरणात् अनवस्था दोषः स्यात् । यदुक्तम्—

"एवमपि अनवस्था स्यात् या मूलं क्षयकारिणी"

पुनः कोऽपि वदेत् न केवलं प्रयोजनं लक्ष्यं भवतु अपितु प्रयोजनेन

सहितं तटमेव, येन व्यञ्जनायाः आवश्यकता न स्यात् इतिचेत् तदपि न युक्तम् । यतः—

"प्रयोजनेन सहितं लक्षणीयं न युज्यते
ज्ञानस्य विषयोह्यन्यः फलमन्यदुदाहृतम्"

अर्थात् प्रयोजनेन सह लक्ष्यार्थः न योक्तव्यः । लक्ष्यार्थः ज्ञानस्य विषयः प्रयोजनफलस्य विषयत्वतः । ज्ञान फलयोर्मध्ये यद्वत् भेदः राराजते तद्वत् लक्षणाव्यञ्जनयोः । पूर्वं घटस्य दर्शनं तदनन्तरं" अहं घटज्ञानवान्" इति ज्ञानस्य फलं भवति । अस्मात् कारणात् प्रयोजनेन सहितं लक्ष्य न योक्तव्यम् । प्रयोजनविशिष्टे लक्ष्ये लक्षणा करणे वक्षमाणवाधा भवतीति मम्मटेन तत् निराकृतम् ।

## प्रश्नः १५- "अनयोर्लक्ष्यस्यलक्ष्यकस्यचन भेदरूपं तादस्थ्यम्" इत्यंशस्य कोऽभिप्रायः ।

उत्तरम्— आलङ्कारिकशिरोमुकुटायमानेन मम्मटेन लक्षणा-विभाजनावसरे प्रथमतया शुद्धागौणी भेदेन लक्षणा द्विधा इति प्रत्यपादि । शुद्धा गौणी लक्षणयोर्मध्ये भेददर्शनाय उपचारामिश्रात् शुद्धा, उपचार मिश्रितत्वात् गौणीति सः भट्टङ्कयति । अयमेव गौणीतः शुद्धायाः भेदः । परन्तु भट्टमुकुलः एतत् न स्वीकृत्य प्रतिपादयति गौणी लक्षणास्थले (गौर्वाहीकः) शक्यार्थलक्ष्यार्थयोः साहश्ययोगादभेदप्रतीतिर्भवति । अपिच शुद्धालक्षणास्थले वाक्यार्थ लक्ष्वार्थयोर्मध्ये सम्बन्धयोगात् भेद प्रतीतिर्भवति । एतदेव गौणीतः शुद्धायाः भेदकमिति मन्तव्यं नतूपचारामिश्रत्वमिश्रत्वमेव ।

भट्टमुकुलस्य मतखण्डनार्थं मम्मटेन । "अनयोः लक्ष्यस्य लक्षकस्यच न भेदरूपं ताटस्थ्यमिति अंशः गृहीतः । अस्य अंशस्यायमेवाभिप्रायः यत्— यथा गौणीस्थले शक्यार्थ लक्ष्यार्थयोरभेदप्रतीतिस्तथा अत्र शुद्धालक्षणायाः उपादान लक्षणालक्षण लक्षणा-स्थले लक्ष्यस्य (तारस्य) लक्षकस्य (गङ्गायाः) च भेदरूपं नताटस्थ्यम् । अर्थात् गौणीवत् अभेदप्रतीतिरित्यर्थः । उभयोर्मध्ये अभेदप्रतीतौ-सत्यां प्रतिपादयितुमभीष्टस्य शीतत्वपावनत्वस्य ज्ञानं सम्भवेत् यदि मुकुलभट्टदिशा उभयो ध्ये भेदप्रतीतिः स्यात् तर्हि प्रयोजनज्ञानं न यायात् । अपिच उभयोर्मध्ये भेदंनीत्वा यदि सम्बन्धमात्र प्रतीतिनिमित्तं आकांक्षास्यात् तर्हि "गंगातटे घोषः" इति वाक्यमद-मनुक्त्वा लाक्षणिक शब्द (गंगायांघोषः) प्रयोगेन कः लाभ? । अतएव गौणीवत् शुद्धायामपि शक्यार्थवाक्यार्थयोरभेदप्रतीतिर्जायते उभयोर्मध्ये (शुद्धा, गौणा) भेदज्ञानाय उपचारमिश्रणामिश्रणमेव साधीयः । नतु अभेदप्रतीतिः ताटस्थ्यभेदकम् ।

**प्रश्नः १६- अभिधामूलाव्यञ्जना प्रतिपादनीया ।**

उत्तरम्— व्यञ्जयतीति व्युत्पत्त्या (वि+अञ्जु+णिच् ल्युट+टाप्) व्यञ्जकः शब्दः भवति । शाब्दी, आर्थी इति भेदेन व्यञ्जनाया भेदद्वयम् । शाब्दीव्यञ्जन, लक्षणा मूलात्वेनाभिधामूलात्वेनचाद्विधा । तत्र लक्षणामूला व्यञ्जना— "गंगायां घोषः" ।

यत्र शब्द परिवर्तनेऽपि नार्थस्य क्षतिर्भवति तत्र आर्थव्यञ्जना, यत्र शब्दपरिवर्तनेन अर्थस्य क्षतिस्तत्र शाब्दी व्यञ्जना ।

अभिधामूला व्यञ्जनायाः लक्षणम्—

"अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते
संयोगाद्यैरवाच्यार्थधीकृत् व्यापृत्तिरञ्जनम्"

अनेकार्थ संश्लिष्टात् शब्दात् यत्राभिधया एकार्थस्य ज्ञानं भवति तत्र विरतायां अभिधायां यया अन्योऽर्थः व्यज्यते सा अभिधामूला व्यञ्जना। अनेकार्थ विशिष्टशब्दाः संयोगादिबलेन कथं एकत्र नियन्त्रिताभवन्ति तत् वक्षमाणोदाहरण योगात् द्रष्टव्यम्।

"संयोगोविप्रयोगश्च साहचर्यं विरोधिता
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः"

१- संयोगः— "सशंखचक्रोहरिः" अत्र, ["यमानिलेन्द्रचन्द्रार्क विष्णुसिंहांशुवाजिषु] शुकाहिकपिभेकेषु हरिर्नाकपिलेत्रिषु" इति अमरकोषानुसारं हरिशब्दस्य १४ अर्थाः सन्ति परन्तु शंखचक्र संयोगात् हरिशब्दः अपरार्थान् न वोधयित्वा केवलं विष्णुं वोधयति। अपिच सवत्साधेनुरानीयतामिति स्थले अनेकार्थस्य धेनुशब्दस्य नियन्त्रणं वत्सा संयोगात् गवि भवति।

२- विप्रयोगः— शंखचक्रविहीनोहरिः (अशंखचक्रोहरिः) इति स्थले शंखचक्रधारणं विष्णौ एव सम्भवात् तद् हीनता तत्रैव संभवति। नान्यत्र।

३- साहचर्य्यम्— "रामलक्ष्मणौ अत्र—

"रामः पशुविशेषेस्यात् जामदग्न्ये हलायुधे
राघवे चासिते श्वेते मनोज्ञेऽपिच वाच्यवत्"

इति विश्वकोशानुसारं रामशब्दः अनेकार्थकः । एवमपि लक्ष्मणशब्दः सारसे दुर्य्योधनपुत्रे शक्तोभवति । परन्तु उभयोः साहचर्य्यात् रामशब्दः पशुप्रभृत्यर्थं विहाय दशरथ पुत्रे तथा लक्ष्मणशब्दः सुमित्रानन्दने नियस्यते ।

४- विरोधिता— "रामार्जुनगतिस्तयोः" कयोरपि जनयोः विरोधभावमवलोक्य वदति कश्चित् "तयोर्गतिः रामार्जुनवत्" । अत्र विरोधभावात् रामशब्दः दशरथपुत्रमवोधयित्वा भार्गवं, अर्जुन शब्दः पाण्डुपुत्रमवोधयित्वा कार्तवीर्य्यं, च वोधयति ।

५- अर्थः-(प्रयोजनम्) "स्थाणुं भजभवच्छिदे" संसारात् मुक्त्यर्थं स्थाणुः सेव्यः । यद्यपि चामरकोशानुसारं "स्थाणुर्ना वा ध्रुवः शङ्कुः" स्थाणूरुद्र रमापतिः इति स्थाणुशब्दस्य अनेके अर्थाः सन्ति तथापि मुक्तिदानाय शिवं विना एते न समर्थाः । अतः अत्र प्रयोजन योगात् स्थाणुशब्द. शिवं वोधयति ।

६- प्रकरणम्- "सर्वजानातिदेवः" "अमरानिर्जरादेवा" इति "राजा भट्टारकोदेव" इति चामरकोशानुसारं तथा' मेघे सुरेराज्ञि देवः" इति विश्वकोशानुसारं देवशब्दस्य अनेके अर्थाः सन्ति । परन्तु "दूतः कथयति" इति प्रकरणयोगात् देवशब्दः राजनि नियन्त्रितोभवति ।

७- लिङ्गम्- "कुपितोमकरध्वजः" इति वाक्ये मकरः जलजन्तु विशेषः तदाकारोवा ध्वजः यस्य इति विग्रहे मकरध्वजस्य समुद्रकन्दर्प औषध-रूपाः अनेकार्थविशेषाः सन्ति । परन्तु कोपाकार लिङ्ग योगात् (कुपितः) मकरध्वजशब्दः कामे नियन्त्रितो भवति ।

८- अन्यस्य शब्दस्य संनिधिः— "देवस्य पुराराते:" अत्र देव-शब्दस्य पूर्वदर्शितप्रकारानुसारं अनेके अर्थाः यद्यपि सन्ति तथापि 'पुरारातिः' इति शब्दस्य सान्निध्यात् पुरनामकस्य राक्षसस्य शत्रुत्वेन शिवेनियन्त्रितो भवति देवशब्दः ।

९- सामर्थ्यम्— "मधुना मत्तः कोकिलः" अत्र "मधुपुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे, वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति" इतिमेदिनी कोषानुसारं अनेकार्थकस्य मधुशब्दस्य नियन्त्रणं वसन्ते भवति । कोकिलस्य उन्मत्ततां प्रति वसन्तकालस्य सामर्थ्यमिति ।

१०- औचिती (योग्यता) "पातुवो दयितामुखम्" सुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि, सन्ध्यन्तरे नाटकादेः शब्देऽपिच नपुंसकम्' इति मेदिनीकारोक्तदिशा मुखशब्दः वदनादिकमर्थं न बोधयित्वा सांमुख्ये (आनुकूल्ये) नियन्त्रितो भवति ।

११- देशः— "भात्यत्र परमेश्वरः" परमेश्वर शब्दस्य विष्णु-शिवादयः अनेके अर्थाः सन्ति परन्तु "विष्णोः शिवस्य वा भानं वैकुण्ठे कैलासेऽपिवा" इतियोगात् अत्र पदे राजधानीरूपात् देश (स्थान) वाचकात् परमेश्वरशब्दः विष्णुं शिवं वा न प्रकाशयन् नरपतिं प्रकाशयति ।

१२- कालः— "चित्रभानुर्विभाति" इति वाक्यं यदि दिवसे उच्चार्यते तर्हि चित्रभानुशब्दः सूर्यं प्रकाशयिष्यति, रात्रौ यदि उच्चार्यते तर्हि बह्निं प्रकाशयिष्यति । चित्रभानुशब्दस्य सूर्याग्नित्वेन अर्थ सम्भवात् कालवैशिष्ट्यात् (समय) सूर्यं वा बह्निं बोधयिष्यति ।

१३- व्यक्तिः— "मित्रं भाति" इतिस्थले मित्रशब्दः बन्धुं व्यनक्ति, यदि मित्रः भाति इति स्यात् तर्हि मित्रशब्दः सूर्यं बोधयिष्यति । "मित्रं सुहृदिमित्रोर्कः" इति कोषानुसारं नपुंसकलिंग-रूपव्यक्त्या मित्रशब्दः बन्धुं तथा पुंलिङ्गरूप व्यक्त्या सूर्यं बोधयति ।

"मित्रं भाति" इत्यपि लिङ्गस्य उदाहरणं सम्भवेत् ।

१४- स्वरः—भरतमुनेः मतानुसारं स्वरः शृङ्गारस्य प्रत्यायकः । अतः स्वरस्य गणना काव्ये समीचीना भवेत् । परन्तु तत् न । भरतमुनेरिदमुदेश्यं व्यङ्ग्यार्थनिमित्तम् । अर्थात् उदात्तादयः काक्वादयो वा स्वराः व्यङ्ग्यार्थप्रत्यायने एव निमित्ती भवन्ति । न खलु अनेकार्थस्य नियन्त्रितरूपे प्रकृतोक्ते । यदि काव्ये स्वरस्य गणना स्यात्, तर्हि श्लेषालङ्कारस्य मूलच्छेदः भवेत् । तत्र एकस्यार्थस्य वाच्यत्वेन ग्रहणात् अन्यस्य व्यङ्ग्यत्वापत्तेः, अतः इन्द्रशत्रुरिति वेदे एव व्यवहारः, न तु काव्ये ।

१५- आदिपदेन चेष्टा—

"एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम्
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः"

अत्र तु वक्तुः कथनावसरे नानार्थयुक्तानां एतत् शब्दानां चेष्टायोगात् (हस्तद्वारा दर्शिताभिनयेन) स्तनाक्ष्यवस्थादिविशेषरूपेऽर्थे नियन्त्रणं भवति ।

**प्रश्नः १७–सोदाहरणमार्थीव्यञ्जना लक्ष्येषु प्रतिपादनीया?**

उत्तरम्— "वक्तृबोद्धव्य काकूनां वाक्यवाच्यान्यसंनिधेः
प्रस्तावदेशकालादेः वैशिष्ट्यात् प्रतिभाजुषाम्
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा"

यत्र वक्तृबोद्धव्यादिवैशिष्ट्यात् सहृदयानामर्थादर्थान्तरस्य प्रतीति-र्भवति साऽर्थीव्यञ्जना ।

१- वक्तृवैशिष्ट्ये यथा—

यः अन्यस्य प्रतीतिनिमित्तं वाक्यमुच्चारयति स वक्ता ।

तद्वैशिष्ट्यात्— "अति पृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखि ! त्वरितम्, श्रमस्वेदसलिलनिःश्वासनिवहा विश्राम्यामि तावत् क्षणम्" जलनिमित्तं पुस्करिणीं प्रति गता काऽपि नायिका विटपुरुषेण तत्रोपभुक्तासती उपभोगजनित श्रमेण श्रान्ता स्वगृहमागच्छन्ती सखीं वक्ति,. अहं पृथुलजलकुम्भानयनेखिन्ना भवामि, अतः कियत्कालं विश्राम्यामि ।

अत्र व्यभिचारिणी वदतीति वाच्य घटित वक्तृवैशिष्ट्यात् चौर्येण कृतां रतिं गोपायतीयमिति सामाजिकैर्बुध्यते ।

२- बोद्धव्यवैशिष्ट्यात्—

औन्निद्र्यं दौर्बल्यं चिन्ताऽलसत्वं सनिःश्वसितम्
मम मन्दभागिन्याः कृते सखि ! त्वामप्यहहपरि भवति ।

नायकसमीपं प्रेरितां तथा तदुपभुक्तां दूतीं नायिका कथयति प्रिय विरहेणाहं नितरां पीडिताऽस्मि । त्वमपि तदन्तिकगमनागमनेन भृशं खिन्नाऽसि । अत्र दूती बोद्धव्या, औन्निद्र्यादिकं त्वामपि परिभवति इति कथनात् तत्कृत् स्वकामुक-उपभोक्तृत्वं व्यज्यते ।

३- काकुवैशिष्ट्ये—

"तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कमधरैः ।

विराटस्या वासे स्थितमनुचितारम्भ निभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु''।र

कायति अर्थान्तरमिति काकुः। अथवा काकुर्जिह्वा। तद्व्यापा
संपादनात् काकुः। उक्तञ्च— "भिन्नकण्ठध्वनिर्धीरैः काकुरित्यः
धीयते" उदाहृते पद्ये भीमस्य उक्तौ युधिष्ठिरः मयि खेदं भजति
कुरुषु'' इतिस्थले काकुमाध्यमेन खेदः कुरुषु कर्तव्यः न मयीति व्यज्यते

अस्याः काको न गुणीभूतव्यङ्ग्यता शङ्कनीया। तत्र गुणीभूत
व्यङ्ग्यस्थले (मथ्नामि कौरवशतं समरे.........) कुपितस्य प्रतिज्ञा
कुरुकुलक्षयस्य भीमस्य उक्तिः सद्यः बाधिता भवति। यत्र विलम्बे
काक्वाऽर्थान्तरस्य प्रतीतिः तत्र ध्वनितम्। यथोक्तोदाहरणे।

४- वाक्यवैशिष्ट्यात्—

"तदानीं ममगण्डस्थलनिमग्नां दृष्टिं नानैषीरन्यत्र
इदानीं सैवाहं तौच कपोलौ न च सादृष्टिः"

स्वनायिकागण्डस्थले प्रतिबिम्बिताया अपर नायिकाया गमनानन्तर
पूर्ववत् दृष्टिमपातयन्तं नायकं नायिका वदति। साऽहं वर्ते, तथापि
ते दृष्टिः, सांप्रतं भिन्ना जाता। अत्र 'तदा' 'इदानीं' पदद्वयस्य
वैशिष्ट्यात् नायकस्य गोपनकामुकता व्यज्यते।

५- वाच्यवैशिष्ट्ये—

"उद्देशोऽयं सरस कदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरित रमणी विभ्रमोनर्मदायाः
किञ्चैतस्मिन् सुरत सुहृदस्तन्वि! ते वान्तिवाता
येषामग्रेसरति कलिताऽकाण्डकोपोमनोभुः॥"

नर्मदाकूले रतार्थिन: कामुकस्य कामुकीं प्रति उक्तिरियम्—
उदाहृते पद्ये विशेषणयुक्तस्य नर्मदोद्देशस्य वाच्यस्य वैशिष्ट्यात् निधुवननिमित्तं प्रवेष्टव्यम् । अलं विलम्बेन इति नायिकाप्रेरणं व्यज्यते ।

६– अन्यसंनिधिवैशिष्ट्यात्—

"नुदत्यनाद्रं मना: श्वश्रूर्मां गृहभरे सकले
क्षणमात्रं यदि भवति संध्यायां न वा भवति विश्रामः"

अत्र गुरुजन समीपेस्थितं नायकं प्रति संकेतकालं वक्तुमसमर्था काचित् कथयति "आसन्ध्यं मम श्वश्रूः मां नियोजयति गृहकर्मणि । केवलं सायंकाले विश्रामकालः स्वल्प: भवति' इति वाक्ययोगात् 'संध्याकालः संकेतकालः" इति व्यज्यते ।

७– प्रस्ताव (प्रकरण वैशिष्ट्ये—

"श्रूयते समागमिष्यति तवप्रियोऽद्यप्रहरमात्रेण
एवमेवं किं तिष्ठसि सज्जय तावत् करणीयम्"

अत्रोपतिमभिसर्तुकामां कामपिकामिनीं तत्सखी कथयति—
अद्य कियत्कालानन्तरं तव प्रियः आगमिष्यति । अस्मात् बहिरगत्वा उपकरणादिकं सज्जय, इति वाच्यः । उपपतिं प्रति अभिसरणोपयोगि-वेशविन्यासप्रकरणात् विदितवृत्तान्ताया: सख्याः तत्प्रति वारणं (अधुना पतिरागमिष्यति अस्मान्नानुसर्तव्यम् ) इति सामाजिकै-र्बुध्यते ।

८- देशवैशिष्ट्यात्—

"अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः !
नाहं हिं दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः"

पुष्पचयनकाले उद्यानमध्ये समागच्छन्तं सखीवेशधारिणं नायक-मवलोक्य काचित् कामुकी समीपस्थं सखीसमूहं वदति "यूयं अन्यत्र गत्वा पुष्पचयनं कुरुत । अहं पीडितास्मि । दूरं गन्तुमसमर्था, इति वाच्यात् स्थानमिदं जनशून्यं, गुप्तकामुकः आनीयतामिति व्यङ्ग्यः निर्जनदेशवैशिष्ट्यात बुध्यते ।

९- कालवैशिष्ट्यं —

"गुरुजनपरतन्त्रप्रिय ! किं भणामि तव मन्दभागिन्यहम्
अद्य प्रवासं व्रजसि व्रज स्वयमेव श्रोष्यसि करणीयम्"

वसन्तकाले प्रवासं प्रति गन्तुकामं प्रियं नायिका कथयति "हे जनकाद्यधीन प्रिय ! अद्य प्रवासं व्रजसि । अनन्तरं मम करणीयं ( मरणम् ) श्रोष्यसि इति वाच्यात् त्वदेकशरणत्वात् अहं अस्मिन् वसन्तकाले नूनं मरिष्यामीति व्यङ्ग्यः सहृदयैरवबुध्यते ।

१०- आदिपदेन चेष्टावैशिष्ट्ये —

"द्वारोपान्तनिरन्तरे मयितया सौन्दर्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् ।
आनीतं पुरतः शिरांशुकमधः क्षिप्तेचले लोचने
वाचस्तत्र निवारितं प्रसरणं संकोचिते दोर्लते ॥

अत्र नायिकायाः गृहसमीपे वर्तमाने नायके, नायिकाकृतोरुयुग-

प्रसारण—शिरोंशुकानयन- लोचनक्षेपणवचननिवारणादीनां चेष्टा-वैशिष्ट्यात् तदीयपरपुरुषविषयकमनोभावः व्यज्यते ।

**प्रश्नः १८– ध्वनिकाव्यस्य साधारणभेदाः उपपादनीयाः ?**

उत्तरम्— यत्र वाच्यार्थात् व्यङ्ग्यार्थस्य प्राधान्यं वर्तते तत्र ध्वनिः स्यात् । तद् युक्तं काव्यं ध्वनिकाव्यमिति मम्मटस्याशयः । यदुक्तम्— "वाच्यातिशायिनि व्यङ्ग्ये ध्वनिस्तत् काव्यमुत्तमम्" आदौ तावत् लक्षणामूला चाभिधामूलात्वेन ध्वनिकाव्यस्य भेदद्वयमस्ति । लक्षणामूलाध्वनिः, अविवक्षितवाच्यत्वेन तथा अभिधामूला ध्वनिः विवक्षितवाच्यत्वेन परिगणितो भवति । यत्र वाच्यार्थः अविवक्षितः ( अन्वयायोगः ) भवति तत्राविवक्षितवाच्यध्वनिरिति मन्तव्यम् । असौ अविवक्षित वाच्यध्वनिः द्विविधः । आद्यस्तावत्—अर्थान्तरसंक्रमितवाच्यध्वनिः । द्वितीयस्तावत् अत्यन्ततिरस्कृतवाच्यः ।

१– अर्थान्तरसंक्रमितवाच्योदाहरणम्—

"त्वामस्मिवच्मिविदुषां समवायोत्रतिष्ठति
आत्मीयां मतिमास्थाय स्थितिमत्रविधेहि तत्"

आत्मीयं प्रति कश्चित् वदति—"अत्र पण्डितानां सघः वर्तते । अतः स्वकीयमत्यनुसारं यथाकिञ्चित् करणीयम्" । यमुद्दिश्य वक्ता वदति सः पुरतः विभ्राजमानः वर्तते । अतः कथनीयं कथयेत् । 'त्वामस्मि वच्मि' इत्यस्य निरर्थकता वर्तते । परन्तु 'त्वामस्मि वच्मि' योगात् अहं त्वामुपदिशामि इति लक्ष्यम् । एतेन तवाहं महानुपकारी अपिच उपकारिणा मया त्वयि उपक्रियते इति व्यङ्ग्यं प्रतीयते ।

२- अत्यन्ततिरस्कृतवाच्यस्योदाहरणम्—

'उपकृतं बहुतत्र किमुच्यते सुजनता प्रथिता भवता परम्
विदधदीदृशमेव सदा सखे! सुखितमास्व ततः शरदां शत

विराजमानं जनमवलोक्य कश्चित वदति 'त्वया यदुपकृतं (उपकृतः) तत् किं कथयामि ! ! सुष्ठु तयातवसौजन्यं प्रकटितं जातम्। एवं कुर्वाणस्त्वं शतवर्षाणि सुखेन तिष्ठ। अयमेववाच्यार्थः। वाच्यार्थः बाधितः सन् वक्तुः कथनावसरे मुखचक्षुर्भङ्गीभि विपरीतलक्षणया अपकारादिकं लक्षयति। तेन च मयि शत्रु माचरितमिति व्यङ्ग्यं प्रतीयते।

अभिधामूलाध्वनिः ( विवक्षितान्यपर-वाच्यम् )

"विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः"

अर्थात् यत्र वाच्यं (वाच्यार्थः) विवक्षितं भवति तत्र सः अन्य ध्वनिः। अर्थात् विवक्षितान्यपरवाच्यध्वनिः। यथा—

'शिखरिणी क्वनु नाम कियच्चिरं किमभिधानमसावकरोत्तप
सुमुखि ! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः

अत्र नायिकां प्रति चाटूक्तिः व्यङ्ग्यः। अस्य व्यङ्ग्यार्थस्य ज्ञाननि मुख्यार्थबाधाद्यभावात् नात्र लक्षणाया अवसरः। वाच्यार्थश्र मात्रेण विवक्षितार्थस्य ज्ञानयोगात् विवक्षितान्यपरवाच्यध्वनेरुदाह मिदम्।

अयमपि विवक्षितान्यपरवाच्य ध्वनिः अलक्ष्यक्रम— लक्ष्य व्यङ्ग्यत्वेन द्विविधः। यत्र व्यङ्ग्यार्थस्य बोधनकाले विभावादि प्रतीत्योः क्रमः न लक्ष्यते पद्मपत्रशतोपरि सूचीभेदवत् तत्रा

क्रमव्यङ्ग्यः। यत्रतु एतत् वैपरीत्यं तत्र लक्ष्यक्रम व्यङ्ग्यः। अलक्ष्य क्रमव्यङ्ग्यः रसाद्यन्तर्गतः।

**प्रश्नः १९- रसस्वरूपमभिधाय तन्निष्पत्तौ भरतसूत्रं भट्टलोल्लटदिशा व्याख्यातं।**

उत्तरम्— "रसः" इति पदं वेदादानीतम्। सोमरसस्यार्थे "दधानः कलशे रसम्" इति ऋग्वेदे (9-63-1) वर्तते। आनन्दार्थेऽपि "रसोवैसः" रसंह्येवायं लब्ध्वाऽनन्दी भवतीति तैत्तरीयोपनिषदि (11-7-1) वर्तते।

यद्यपि अनेन प्रकारेण रसशब्दः वेदे उपलभ्यते तथापि साहित्विका रससंप्रदायोन्मोचकाथापर्यन्त साधुवादं भरतमुनये। वस्तुतः काव्यनाटकानां श्रवण-दर्शनवेलायां सामाजिकाः यमानन्दं लभन्ते सः आनन्दः रसएव। रसस्य स्वरूपं प्रत्यपादीत्थं मम्मटेन यत्—

"कारणान्यथ कार्य्याणि सहकारीणि यानिच
रत्यादेः स्थायिनो लोके तानि चेन्नाट्य काव्ययोः
विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः
व्यक्तः स तैर्विभावादैः स्थायिभावोरसः स्मृतः"

लोके यानि कारणानि (ललनादिरूपाणि) कार्य्याणि (रत्यादि जन्यानि कटाक्षभुजोत्क्षेपकाकूक्ति प्रभृत्यनि) सहकारीणि (निर्वेद-ग्लान्यादीनि) वर्तन्ते तेषां यदि काव्ये संमेलनं भवति तर्हि तानि

क्रमशः विभावानुभावव्यभिचारिभावत्वेन परिचितानि स्युः । तै: व्यक्तः स्थायिभाव: रसरूपतामेति ।

भरतमुनिमतानुसारं— विभावानुभावसंचारिभाव. संयोगाद्रस निष्पत्ति: । "केचिन्निगदन्ति". सूत्रस्थ "संयोगात्" इति पदं "हेतौतृतीयापञ्चम्यो" इत्यनुसारं पञ्चमी विभक्त्यन्तम् । अतः विभावादिनां संयोगहेतुत्वात् रसनिष्पत्तिः । येन विभावादयः कारणपदं यायु: । रसः कार्य्यपदं यायात् । परन्तु एतत् न समीचीनम् । रसः न कार्य्यः; विभावादयः न कारण पदभाजः, अपिच "संयोगात्" इति न हेतु मूला पञ्चमी । अस्मन्मतेन संयोगादिति "ल्यब्लोपेकर्मण्यधि करणं" च इति योगेन ल्यबन्त पञ्चमी। अर्थात् विभावादिनां संयोगमाश्रित्य रसनिष्पत्तिः। अतः हेतुमूला: पञ्चमीत्वेन रसः कार्य्यः इति वदन्त: निरस्ताः ।

रसोत्पत्ति सूत्रव्याख्यानावसरे भिन्नमतानामाचार्य्याणां मध्ये भट्टलोल्लटशङ्कुकभट्टनायकाभिनवगुप्तपादाः मुख्याः । भरत सूत्रस्य व्याख्यानं भिन्न प्रकारेण एते कुर्वन्ति ।

भट्टलोल्लटमतम्—

मम्मटेन अयं रससूत्रस्य प्रथमव्याख्याकाररूपेण सम्मानितः। अस्यमतेन संयोगात् इति कार्य्यकारणभावसम्बन्धः निष्पत्तिरित्यस्य "उत्पत्तिः" इति अर्थः भवति । अस्यमतेन रामादौ अनुकार्य्ये रसस्य स्थितिः । न तु नटसामाजिकेषु । अयमासीत् मीमांसकः

अभिधावादीच । स्थायिभावेन साकं विभावस्य योगात् उत्पाद्योत्पादकसम्बन्धः भवति तेनच रसस्योत्पत्तिर्जायते । पुनश्च स्थायिभावेन साकं अनुभावस्य योगात् गम्यगमकभावसम्बन्धोभवति, तेनच रसस्य प्रतीतिर्भवति । अपिच स्थायिभावेन साकं व्यभिचारिभावसंयोगात् पोष्यपोषकभावाख्यः सम्बन्धः भवति, तेन च रसस्य निष्पत्तिर्भवति ।

मीमांसानुसारं रज्जुदर्शनात् अविद्यमानेऽपि सर्पे यथा तद् भयं जायते तथा नटे अविद्यमानत्वेऽपिरामत्वे तद् ज्ञानं भवति ।

भरत सूत्रे स्थायिभावस्योल्लेख्योनास्ति । परन्तु अस्यमतेन तस्य रसमूलत्वेन वर्तमानात् स्थायिशब्दः गृहीतः । अयं स्थायिभावः विभावादिभ्यः उत्पन्नोभवति । अतः अमु उत्पत्ति वादीति वदन्ति सर्वे ।

एतद्व्याख्याने रसस्यानुकार्य्यनिष्ठत्वं प्रतिपादित भवति । परन्तु रसः सामाजिकनिष्ठ इति सर्वैरनुभूयते । अतः व्याख्याने अस्मिन् अरुचियोगात् ग्रन्थकारः शङ्कुकमतावतारणं करोति ।

## प्रश्नः २०- भरतकृतरससूत्रव्याख्याने शङ्कुकस्य मतं समालोचयत ?

उत्तरम्- भरतमुनिकृत रससूत्र व्याख्याने शङ्कुकः भट्टलोल्लटात् उन्नततरं मतं ददाति । नैयायिकसरणिमनुसृत्य असौ नैजंमतं विस्तारयति । अनुमितिवाद्ययमेव । एतन्मतेन नटः कृत्रिमः । परन्तु कृत्रिमानटादयः चारुतया इत्थं स्वाभिनयं संपादयन्ति येन

सामाजिकाः नटे प्रकृतरामस्याभिनयाभिन्नं विलोक्य अनुमानेन वासनावलेन रसमास्वादयन्ति । पर्वते धूमं विलोक्य "पर्वतो वह्निमान् धूमात्" इति यथा वह्नेरनुमान भवति तथा रामादिवद् भावादिकं वीक्ष्य सामाजिकाः तत्र रसस्थितिमनुमिन्वन्ति । अपि चित्रे तुरगदर्शनानन्तरं सम्यक्-मिथ्या-संशय-सादृश्यातिरिक्तेन ज्ञानबलेन "अयमश्व" इतीव नटे रामं दृष्ट्वा अयं राम इति बुद्ध्या अनुमानेन रसमास्वादयन्ति ।

अस्यमतस्य अयमेवसारः यत्— कुज्झटिका प्रदेशं निशायां असतोऽपि धूमेनाग्नेरनुमानवत् सुनिपुणं नटेन प्रकाशितैरसद्भिः विभावादिभिः रतिरनुमीयते । अस्यमतेन "संयोगः" इत्यस्य अनुमाप्यानुमापकभावसम्बन्धः, तथा "निष्पत्तिः" इत्यस्य "अनुमिति रित्यर्थः भवति ।

प्रत्यक्षज्ञानं यद्वद् चमत्काराधायकं न तद्वत अनुमानमिति कृत्वा जायतेऽरुचिरेतद्व्याख्याने ।

## प्रश्नः २१- भट्टनायकस्य रसनिष्पत्तिविषयकं मतं संक्षेपतया आलोचयत ?

उत्तरम्—महात्मना अनेन भरत नाट्यशास्त्रोपरि काचिट्टीका अकारि । "तट्टीकायां रसनिष्पत्तिसूत्रमानीय अयं स्वकीयं स्वतन्त्रं मत प्रददाति । रसनिष्पत्तिविषये भुक्तिवादसिद्धान्तस्य परिपोषकेनानेन व्यापारत्रयं स्वीक्रियते । एतेषु व्यापारेषु अभिधाव्यापार

आद्यः "अभिधाव्यापारेणानेन आदौ शब्दार्थयोः ज्ञानं समुदेति। द्वितीयेन भावकत्व व्यापारेण विभावादयः रत्यादिस्थायिभावाश्च साधारणीकृताः सन्तः अपिच "परस्य न परस्येति" मम न मम" इति बन्धनान्मुक्ताः सन्तः उपभोग्याः भवन्ति। तृतीयेण भोजकत्व-व्यापारेण रजस्तमसी अभिभूय सत्त्वस्याविर्भावो भवति। भट्टनायकः सांख्य मतानुसारं मतमिदं प्रकाशयति। एतन्मतेन "संयोगात्" इत्यस्य अर्थः "भोज्यभोजकभावसम्बन्धः" अपिच निष्पत्तिरित्यस्य अर्थः भुक्तिरिति भवति।

वाक्यप्रदीपे उक्तम्— 'तस्मात्' विभावादिभिः संयोगात् भोज्यभोजकभावसम्बन्धात् रसस्य निष्पत्तिभुक्तिरिति सूत्रार्थः अत्र व्याख्याने अधिकतया भावकत्व भोजकत्वव्यापारद्वय कल्पने प्रमाणाभावः। अपि च साक्षात्कारस्य सत्त्वोद्रेकविषये मानाभावः इति हेतोः। अरुचिर्जायते।

**प्रश्नः २२—रसनिष्पत्तिविषये अभिनवगुप्तस्य मतं विषदयत?**

उत्तरम्— काव्यप्रकाशानुसारं रससूत्रव्याख्याने व्यञ्जनावादिनः अभिनवगुप्तस्य मतं अन्तिमे वर्तते। रसशास्त्रालङ्कारशास्त्रयोमध्ये अस्य मतं दार्शनिकमनोवैज्ञानिकाधारत्वात् अत्यन्तं प्रसिद्धं भवति।

एतन्मतेन रसः व्यङ्ग्यः। सामाजिकेषु रसनिष्पत्तिः भवति। स्थायिभावाः सामाजिकेषु स्थिररूपेण वर्तन्ते। विभावादिसंयोगात् जलबिन्दुपतनेन मृत्तिकातः गन्धस्याभिव्यक्तिरिव स्थायिभावस्याभिव्यक्तिर्भवति। गन्धस्याघ्राणकाले यथा आघ्राणकारिणः गन्धस्य

स्वरूपं न जानन्ति न वा विलोकयन्ति गन्धस्य स्वरूपम्, तथा रसास्वादनकाले सामाजिकाः न जानन्ति रसरूपं न वा पश्यन्ति तत्स्वरूपम्। केवलं गन्धाघ्राणवत् रसमनुभवन्ति। सूत्रस्थ 'संयोगात्' इत्यस्यार्थः व्यङ्ग्यव्यञ्जकभावसम्बन्धः, अपिच निष्पत्तिरित्यस्य अभिव्यक्तिरित्यर्थः भवति।

प्रणाल्या यथाजलं वहति, अपि च इक्षुर्यथा निपीडितः सन् मधुररसत्वेन परिणमति न तथा काव्यरसः। प्रत्युत विभावादिभिरुद्बोधितः सन् विमुक्तरजस्तमोगुणैः सामाजिकैरनुभूयते।

अयमेव सारांश अस्य मतस्य यत् – काव्येनाट्ये च श्रवण-दर्शनाभ्यां विभावादीनां साधारणरूपेण ज्ञानात् सामाजिकानां हृदि स्थिताः रत्यादयः भावाः वासनया अभिव्यक्ताः भवन्ति। तेन सामाजिकाः परमानन्दसन्दोहमात्मन्यनुभवन्ति। स एवानन्दः रसपदवीं अधिरोहति।

## प्रश्नः २३—रसस्यालौकिकत्वं युक्त्या प्रतिपादयत ?

उत्तरम्— लोके भवः लौकिकः। लोकशब्दात् 'तत्रभवः' इति 'ठक्' प्रत्ययेन लौकिकशब्दः संजायते। रसः नैवम्भूतः यः लोके द्रष्टुं शक्यते। केवलं सामाजिकैरनुभूयते सः।

रसः न ज्ञाप्यः— ज्ञाप्य वस्तुनः पूर्वसिद्धिरस्ति। परन्तु रसस्य पूर्वसिद्धिर्नास्ति। अदर्शनकालेऽपि ( अननुभवकाले ) घटादिवत् तस्य अविद्यमानत्वतः। अन्धकारप्रकोष्ठे घटो वर्तते। आलोकेन तस्य दर्शनं जायते। आलोकः घटं ज्ञापयति। परन्तु रसविषये नैतादृशी अवस्था

जायते। यदा विभावादयः मिलिताः भवन्ति तदा रसोत्पत्तिः भवति। रसस्य पूर्वसिद्धि अभावात् न ज्ञाप्य पदवाच्यतामर्हति रसः।

रसो न कार्यः—रसः कार्यपदमपि न यायात्। यतः विभावादयः न कारणपदं भजन्ते। कोऽपि पृच्छेत् विभावानुभावव्यभिचारिभाव-संयोगात् रसनिष्पत्तिरिति भरतसूत्रे 'संयोगात्' यत् पदं वर्तते तत् 'हेतौ तृतीया पञ्चम्य'नुसारं हेतुयोगात् पञ्चमी विभक्तिः भवति। अपिच हेतुर्ना कारणं बीजमिति अमरशासनात् विभावादयः कारण-पात्रम्। 'कारणगुणाः कार्यगुणानारभते' इतिनयेन रसः कार्यः भवितुमर्हति। परन्तु तत् न युक्तम्। अत्र संयोगात् इति न हेतुमूला-पञ्चमी अपिच 'ल्यब् लोपे'पञ्चमीति दर्शितं रसस्वरूपकथनकाले।

अपिच कार्यकारणयोर्मध्ये पूर्वापरभावः वर्तते। विश्वनाथानुसारं चन्दनस्पर्शानन्तरमेव शीतलत्वज्ञानं भवति। युगपत चन्दनस्पर्श-ज्ञानं तथा शीतलत्वज्ञानं न भवति। अनयोर्मध्ये कार्यकारणभाव-योगात् मम्मटानुसारं निमित्तकारणदण्डचक्रादीनां विनाशेऽपि घटकार्यस्य वर्तमानात् तेषु कार्यकारणभावः समीचीनः। परन्तु विभावादीनां नाशे रसस्य विनाशात् नात्र कार्यकारणभावः।

नामजात्यादिरहितं ज्ञानं निर्विकल्पकम्। निर्विकल्पकंज्ञानं न रसस्य ग्राहकम्। विभावादिपरामर्शेण रसोत्पत्तित्वात। सविकल्पकं (नामजात्यादिसहितम्) ज्ञानमपि न रसस्य ग्राहकम्। यतः सविकल्पकज्ञानेन गृहीतं वस्तु प्रकाशयितुं शक्यते, परन्तु रसः न

प्रकाश्यः । केवलमनुभूयते सः अतः सविकल्पकमपि ज्ञानं न तत्प्रका-
कम् । घटादीनां दर्शनानन्तरं येन ज्ञानेन तत्स्वरूपं प्रकाशयितुं शक्
तद्ज्ञानमेव सविकल्पकम् । पृथग्पदेन घटादीनां व्यवहारवत् र-
तथा अभावात न सविकल्पकज्ञानवेद्योऽसौ ।

रसोऽपि न नित्यः । नित्यवस्तुनः स्थितिर्नितरामेव । प-
रसस्य स्थितिः नैतादृशी । विभावादिसंयोगात प्राक् रससत्ता-
अभावात् रसस्य न नित्यत्वम् । अतः सर्वलौकिकस्थितिविलक्ष-
मलौकिकः ।

**प्रश्नः २४ — रसनामान्युल्लिख्य शृङ्गारस्य भेदा-
उदाहरणेषु संगमयत ?**

उत्तरम्— रस्यते, आस्वाद्यते, ( अनुभूयते ) इति रसशब्द-
व्युत्पत्तिः । रसस्य मुख्यतया अष्टौ भेदाः सम्भवन्ति । ( दृश्यकाव्ये
श्रव्यकाव्ये शान्तरसः संभवेत् ।

"शृङ्गार हास्य करुणरौद्रवीरभयानकाः
वीभत्साद्भुतसञ्ज्ञौ चेत्यष्टौ नाट्ये रसाःस्मृताः"

रसेषु शृङ्गारः आद्यः । शृणाति, विषमदशाप्रापणेन हि-
युवकान् इति व्युत्पत्त्या शृङ्गपदं निष्पद्यते । (शृङ्गं हि मन्मथोद्भे-
शृङ्गमति उपपदात् ऋ गतौ धातोः 'कर्मण्यण्' प्रत्ययेन शृङ्गार-
जायते । शृङ्गारस्यापि द्वौ भेदौ । एकः सम्भोगः, अपरः विप्रल-
यत्र रतिः प्रकृष्टा तथा नायकनायिकयोः मिलनं भवति
सम्भोगशृङ्गारः भवति । यथा—

"शून्यं वासगृहं विलोक्य शयनात् उत्थाय किञ्चित् शनै
निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता वालाचिरं चुम्बिता"

अत्र नायकः आलम्बनविभावः । शून्यंगृहमुद्दीपनम् । चुम्बनमनुभावः । लज्जा व्यभिचारिभावः । रतिः स्थायिभावः । एतेषां मिथः संयोगात् शृङ्गारस्य भानं भवति ।

विप्रलम्भः— यत्र नायकनायिकयोर्मध्ये विच्छेदोजायते तत्र विप्रलम्भ शृङ्गारः । विप्रलम्भः पञ्चधा, अभिलाषविरह–ईर्षाप्रवास शापभेदेन ।

१- अभिलाषः—प्रेमार्द्राः प्रणय स्पृशः परिचयादुद्गाढरागोदया-
स्ता स्तामुग्ध दृशोर्निसर्गमधुराश्चेष्टाभवेयुर्मयि ।
यास्वन्तः करणस्य वाह्यकरणव्यापाररोधीक्षणा-
दाशंसा परिकल्पितास्वपि भवत्यानन्दसान्द्रोलयः ।"

अत्र नायिका (मालती) आलम्बनम् । नायिकायाः विलासानुस्मरणं उद्दीपनम् । आशंसा (मनोरथः) अनुभावः । उत्कण्ठादिर्व्यभिचारि भावः इतिः स्थायिभावः । मृतायाः नायिकायाः पुनः प्राप्तिनिमित्तं नायकस्य (माधवस्य) अभिलाषः वर्णितः ।

२- विरहः- "अन्यत्र व्रजतीतिकाखलुकथा नाप्यस्य तादृगसुहृद्
योमां नेच्छति नागतश्च हहहा कोयं विधेः प्रक्रमः

इत्यल्पेतर कल्पना कवलित स्वान्तानिशान्तान्तरे
वालावृत्त विवर्तन व्यतिकरा नोप्नोति निद्रां निशि,'

दत्तसंकेतस्य नायकस्य रातौ अनागमनेन विरहदुखार्तायानायिकाया विरहप्रसङ्गवर्णनमिदम् । अत्र नायकः आलम्बनम् । रात्रिस्तथा शून्यगृहं उद्दीपनम् । नायिकाया विवर्तनमनुभावः । "हहहा" इति दुःखमिश्रितविस्मयभावः व्यभिचारी । एतत्समेलनेन नायिकाया विरहस्य द्योतनं भवति ।

३-ईर्षा- "सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोल मूलगलितैः पर्य्यस्त नेत्रोत्पला
वाला केवलमेव रोदिति लुठत् लोलालकैरश्रुभिः"।

काचित् स्व प्रेयस्याः दुःखमसह्यमानासती वक्ति कामपि नायिकाम् । उदाहृते पद्ये पतिरालम्बनम् । अपराधः उद्दीपनम् क्रन्दनमनुभावः असूया व्यभिचारिभावः ।

४- प्रवासः— "प्रस्थानं वलयैः कृतं प्रियसखैरस्त्रैरजस्रं गतं
धृत्या नक्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः
यातुं निश्चित चेतसि प्रियतमे सर्वेसमं प्रस्थिता
गन्तव्ये सति जीवित ! प्रियसुहृद सार्थः किमुत्यज्यते"

पत्युर्विदेशगमनानन्तरं काचित् विरहिणी प्रलपति । अत्र स्वामी आलम्बन विभावः । स्वामिनः गमनमुद्दीपननम् । कृशता अनुभावः नायक गतचिन्ता व्यभिचारिभावः ।

५- शापः— "त्वामालिख्यप्रणयकुपितां धातुरागैः शिलाया—
मात्मानं ते चरण पतितं यावदिच्छामि कर्तुम् ।
अस्त्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यतेमे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः"

मेघदूते प्रियामुद्दिश्य यक्षस्य विलाप वर्णने श्लोकोऽयं न्यस्तः । अत्र नायिका आलम्बनम् । तस्याः प्रेमकोपः उद्दीपनम् । पादपतनादिः अनुभावः । यमगतासूया व्यभिचारिभावः । कुबेरस्य शापयोगात् एतादृशी अवस्था यक्षस्य ।

**प्रश्नः २५- हास्यादीनां रसानां सङ्गतिः प्रदर्शनीया ?**

उत्तरम्— हास्यस्य-

आकुञ्च्य पाणिमशुचिं मम मूर्ध्निवेश्या
मंत्राम्भसां प्रतिपदं पृषतैः पवित्रे ।
तारस्वनं प्रथित थूतकमदात् प्रहारं
हा हा हतोऽहमितिरोदिति विष्णुशर्मा ।

श्लोके अत्र विष्णुशर्मा आलम्बनम् । रोदनमुद्दीपनम् । स्मितातिहसितरुदितादयः अनुभावाः । दर्शकस्य आवेगस्तथा चापल्यं व्यभिचारिभावः । अत्र स्थायिभावत्वेन हासः वर्तते ।

करुणस्य— "हामातस्त्वरितासि कुत्रकिमिदं हादेवताः क्वाशिषः
धिक् प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषुदग्धेदृशी ।
इत्थं घर्घर मध्य रुद्धकरुणाः पौराङ्गनानां गिर—
श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्तिभित्तीरपि"

नायिकाया मरणानन्तरं परिवार जनस्य करुणविलापवर्णनग्र पद्यमिदमवतारितम् । अत्र श्लोके प्रमीता नायिका आलम्बनम् "हा हा" इत्यादि उद्दीपनम् । रोदनमनुभावः मूर्छादयः व्यभिचारि भावाः । शोकः स्थायिभावः ।

रौद्रस्य—

"कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुज पशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीम किरीटिना—
मयमहमसृङ् मेदोमांसैः करोमिदिशांबलिम्"

वेणीसंहारे क्रुद्धस्याश्वत्थाम्न उक्तिरियम् । अत्र स पाण्डवाः आलम्बनम् । अस्त्रोद्यमन मुद्दीपनम् । "नूनं दिशां विधास्यामीति प्रतिज्ञा अनुभावः । गर्वः व्यभिचारिभावः । क्रो स्थायि भावः ।

वीरस्य—

"क्षुद्राः सन्त्रासमेते विजहितहरयः क्षुण्ण शक्रेभकु
युष्मद्देहेषु लज्जां दधति परममी सायकानिष्पतन्तः
सौमित्रे ! तिष्ठ पात्रं त्वमसि नहिरुषां नन्वहं मेघ
किञ्चित्भ्रूभङ्ग लीलानियमित जलधिं राममन्वेष

उदाहृते पद्ये रामः आलम्बनम् तत्संपादितसमुद्रवन्धनमुद्दीपनम् पराक्रमशालिनि रामचन्द्रे इन्द्रजितः स्पर्धा अनुभावः । "ल दधति" इत्यनेन गर्वः संचारि भावः ।

भयानकस्य—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतन भयात् भूयसा पूर्वकायम्
दर्भैरर्धावलीढैः श्रमविवृतमुखात् भ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वात् वियति वहु तरं स्तोकमूर्व्यां प्रयाति

शाकुन्तलनाटके अनुद्र तात् राज्ञः विभीय प्रपलायितस्य मृगस्य वर्णनमिदम् । अत्र राजा आलम्बनम् । शरपतनमुद्दीपनम् । पलायनं अनुभावः । त्रासः व्यभिचारिभावः । भयं स्थायिभावः ।

वीभत्सस्य—

"उत्कृत्योत्कृत्यकृत्तिं प्रथममथपृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्र पूतीनि जग्ध्वा ।
आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कःकरङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥"

उदाहृते पद्ये शवः आलम्बनम् । शवस्य मांसभक्षणमुद्दीपनम् । तदवलोककारिणां नासाकुञ्चनादयः अनुभावाः । उद्वेगः व्यभिचारि भावः । जुगुप्सा स्थायिभावः ।

अद्भुतस्य—"चित्रं महानेषवतावतारः क्वकान्तिरेषाभिनवैव भङ्गिः
लोकोत्तरं धैर्यमहोप्रभावः क्वाप्याकृतिर्नूतन एषसर्गः"

अत्र वामनः आलम्बनम् । कान्तिरुद्दीपनम् । स्तवः अनुभावः मतिधृत्यादयः व्यभिचारिभावाः । विस्मयः स्थायिभावः ।

प्रश्नः २६—अर्थशक्त्युद्भव ध्वनेर्भेदाः सोदाहरणं प्रदर्शनीयाः

उत्तरम्—"अर्थशक्त्युद्भवोऽप्यर्थः व्यञ्जकः सम्भवी स्वतः
प्रौढोक्तिमात्रसिद्धो वा कवेस्तेनोम्भितस्य वा
वस्तुवालङ्कृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत्
वस्त्वलङ्कारमथवा तेनायं द्वादशात्मकः"

शब्दपरिवृत्तिसहत्वमर्थशक्त्युद्भवत्वम् । अयं अर्थशक्त्युभवध्वनिः द्वादशधा । आदौ स्वतः सम्भवि-कविप्रौढोक्ति-कविनिबद्धवक्तृप्रौढोक्ति भेदेन त्रिधाऽपि वक्षमाणप्रकारेण सः द्वादशधा भवति ।

१– स्वतः सम्भविना वस्तुना वस्तुध्वनिः—

"अलसशिरोमणिधूर्तानामग्रिमः पुत्रि ! धनसमृद्धिमयः
इतिभणितेन नताङ्गी प्रफुल्ल विलोचना जाता"

अत्र पद्ये अलसशिरोमणित्वेन विदेशे अन्यनायिकागृहं गन्तुमसमर्थ अयम् । धनसमृद्धिमयत्वेन सुखीति मनसा विचिन्तिता कुमारी प्रफुल्लविलोचनत्वरूपेण वस्तुना "नायकोयं मदीय उपभोगयोग्यः" इति वस्तु प्रकाशयति ।

२- स्वतःसम्भविवस्तुना अलङ्कारध्वनिः—

धन्यासि या कथयसि प्रियसंगमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किञ्चिदपि स्मरामि ॥

उदाहृते पद्ये सखीं प्रति या धन्यता प्रतिपादिता, तद्विषयक वाच्ये

वस्तुना सुरतसमये विषयान्तर वेदनेन रागस्य कृत्रिमतया त्वमधन्या परन्तु ममतु उन्मोचिते नीवी भुटे प्रेमाधिक्यात् मया किञ्चिदपि न ज्ञायते इति अहं धन्यपात्रं भवामीति व्यतिरेकालङ्कारः व्यज्यते।

३- स्वतः सम्भविनालङ्कारेण वस्तुध्वनिः—

"दर्पान्धगन्धगजकुम्भकपाट कूट संक्रान्तिनिघ्नघनशोणितशोण शोचिः
वीरैर्व्यलोकि युधि कोप कशाय कान्तिः काली कटाक्ष इव यस्य
करे कृपाणः"

श्लोकेऽस्मिन् "वीरैर्व्यलोकि काली कटाक्ष इव कृपाणः" इति वाच्येन उपमालङ्कारेण सद्योऽयं रिपून् घातयिष्यतीति वस्तु व्यज्यते।

४- स्वतः सम्भविनालङ्कारेणालङ्कारध्वनिः—

"गाढकान्त दशनक्षतव्यथा सङ्कटादरिबधूजनस्य यः
ओष्ठ विद्रुम दलान्यमोचयन्निर्दशन् युधि रुषानिजाधरम्"

अस्मिन् पद्ये "यः स्वकीयमधरं दशति, सः कथं रिबु स्त्र्यधरदर्शनं विमोचयतीति विरोधालङ्कारेण वाच्येन् निजाधरदर्शनमात्रेण सः शत्रून् मारयति इति तुल्ययोगितालङ्कारः व्यज्यते।

कविप्रौढ़ोक्तिभेदेषु—

१- कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः—

"कैलासस्य प्रथमशिखरे वेणु संमुर्च्छनाभिः
श्रुत्वा कीर्तिं यिवुधरमणी गीयमानां यदीयाम्
स्तस्तापाङ्गा सरसविसिनी काण्ड संजात शङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति।"

अचेतनभूतायाः कीर्त्याः श्रवणप्रवेशासम्भवात् विसिनीभ्रान्त्या

हस्तिनः स्वकर्णे करार्पणं वदधतीति कविप्रौढोक्ति सिद्धेन वस्तुना बुद्धिहीनानां करिणां तव कीर्तिश्चमत्कारं जनयतीति वस्तुव्यज्यते। कीर्ति श्रवणानन्तरं कर्णकूहरे हस्तावर्तनं हस्तिनां न स्वत.सम्भवी। परन्तु कविसंप्रदाय प्रसिद्ध्यनुसारं एतत् कविना वर्णितम् ।

२- कविप्रौढोक्तिसिद्धेन वस्तुनालङ्कारध्वनिः—

"केशेषु वलात्कारेण तेन च समरे जयश्रीगृंहीता
यथाकन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिता"

अत्र 'कन्दराभिः कण्ठे गृहीता" इति एवं रूपेण कवि प्रौढोक्ति मात्रसिद्धेन वस्तुना "कन्दराः किमु तान् भीतान् रिपून् स्वकीयोदरे धारयतीति" उत्प्रेक्षालङ्कारः व्यज्यते ।

३- कविप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिः—

"गाढालिङ्गनरभसोद्यते दयिते लघुसमुपसरति
मनस्विन्याः मानः पीडन भीत इव हृदयात्"

अत्र श्लोके "पीड़नभीत इव" इति कवि प्रौढोक्तिसिद्धेन उत्प्रेक्षालङ्कारेण (चेतनहीनस्य मानस्य पीड़नभीतिः नास्तीति उत्प्रेक्षायाः स्वतःसम्भव्यभावात्) आलिङ्गनप्रत्यालिङ्गनसुरत् क्रीड़ातत्परादिवस्तु व्यज्यते ।

४- कवि प्रौढोक्तिसिद्धेनालङ्कारेणालङ्कारध्वनिः—

"यास्थविरमिव हसन्ती कवि वदनाम्बुरुहवद्धनिरिवेशा
दर्शयति भुवनमण्डलं अन्यदिव जयति सा वाणी"

अत्र श्लोके "कवित्रदनाम्बुरुहबद्धविनिवेशा यास्थविरं "हसन्तीव" तथा 'अन्यत् जयतात्र" इति उत्प्रेक्षालङ्कारेण ब्रह्मसृष्टितः कवेः सृष्टेराधिक्यं व्यतिरेकालङ्कारेण व्यज्यते ।

कविनिबद्ध वक्तृप्रौढोक्तिः

१- कविनिबद्ध वक्तृप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः—

"येलङ्कागिरि मेखलासु स्खलिताः सम्भोग खिन्नोरगी—
स्फारोत् फुल्लफणा बलीक वलने प्राप्तादरिद्रत्वम्
त इदानीं मलयानिला विरहिणी निःश्वाससपर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्य पूर्णा इव"

अत्र पद्ये 'हेमकूट पर्वतसम्बन्धिनां वायूनां सर्पिणीकर्तृकभक्षणात् कृशत्वेऽपि (अल्पत्वेऽपि) विरहिणी निःश्वास संपर्कात् पुनः पूर्वावस्था जातेति कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेन वस्तुना विरहिणी निःश्वास संपर्किणः वायवः किम्वा न कुर्वन्ति इति वस्तु व्यज्यते । अत्र "तारुण्य पूर्णाइव" इति विद्यमानायां उत्प्रेक्षायामपि सा न व्यञ्जिका । तद्विरहेऽपि कवेस्तात्पर्य्य स्फुटनात् ।

२- कविनिबद्ध वक्तृप्रौढोक्ति मात्रसिद्धेन वस्तुनालङ्कारध्वनिः-

"सखि ! विरचय्य मानस्य ममधीरत्वेनाश्वासम्
प्रियदर्शन विश्रृङ्खल क्षणे सहसा तेनापसृतम्"

उदाहृते पद्ये कान्तावलोकनानन्तरं धैर्य्येणापसृतमिति कविनिबद्ध वक्तृप्रौढोक्ति सिद्धेन वस्तुना "सा प्रार्थनां विना प्रसन्ना जाता" इति

विभावनालङ्कारः व्यज्यते। (विभावना विना हेतुं कार्य्योत्पत्तिर्य-च्यते) इति लक्षणात् अपिच प्रियदर्शनं सोढुं न शक्यते इति उ-प्रेक्षालङ्कारो व्यज्यते।

३– कविनिबद्ध वक्तृप्रौढोक्तिमात्रसिद्धेनालङ्कारेण वस्तुध्वनिः

"आर्द्राद्रिकरजरदनक्षतेन तव लोचनयोर्ममदत्तम्
रक्तांशुकंप्रसादः कोपेनपुनरिमे नाक्रान्ते।"

परस्त्रीसंसर्ग चिह्नितं नायकं क्रुधा काचित् वदति— प्रिय! क्रोधे मम नयने न रञ्जिते। परन्तु परनायिका सम्भोगात् करजरद क्षतं प्रति अयं रक्तवस्त्रप्रसादः।" अत्र कथं "कुपिते नेत्रे धारयसि इति प्रश्नोत्थापनात् उत्तरालङ्कारः। अनेनालङ्कारेण केवलं नखदन्त क्षतं न गोपायसि प्रत्युत तेषामहं प्रसाद पात्रं जातेति वस्तु व्यज्यते।

४- कविनिबद्धवक्तृप्रौढोक्ति मात्र सिद्धेनालङ्कारेणालङ्कार ध्वनिः—

"महिला सहस्रभरिते तव हृदये सुभगसाऽमान्ती
मनुदिनमनन्य कर्मा अङ्गं तन्वपि तनयति"

अवकाशमलभमान (अमान्ती) निमित्तं महिला सहस्रभरितत्वं हेतुः। शरीरक्षीणीकरणे अवकाशंप्राप्नोति (अवकाशप्रापणाय क्षीणी-करणत्वं हेतुः) इति द्वाभ्यां हेतु-अलङ्काराभ्यां तनुक्षीणीकरणेऽपि सांप्रतं सा तव हृदि नास्तीति विशेषोक्तिरलङ्कारः व्यज्यते।

विशेषोक्तिरखण्डेषु कारणेषु फलावचः इति लक्षणात्।

प्रश्नः २७-गुणीभूत व्यङ्ग्यस्य मुख्य भेदान् सोदाहरणं प्रदर्शयत ?

उत्तरम्— यत्र स्थले व्यङ्ग्यार्थः वाच्यार्थात् प्रधानं न भवति वा उभयोर्मध्ये समं प्राधान्यं भवति तत्र गुणीभूतव्यङ्ग्यं भवति । आदौ गुणीभूत व्यङ्ग्यस्य अष्टौभेदाः सम्भवन्ति । ते यथा—

"अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम्
संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम्
व्यङ्ग्यमेव गुणीभूत व्यङ्ग्यस्याष्टौभिदाःस्मृताः"

(अगूढम्[1], अपरस्याङ्गम्[2], वाच्यसिद्ध्यङ्गम्[3], अस्फुटम्[4], संदिग्धम्[5], तुल्यप्राधान्यम्[6], काक्वाक्षिप्तम्[7], असुन्दरम्[8])

१- अगूढम्—यत्र वाच्यार्थादप्रधानीभूते व्यङ्ग्यार्थे गूढतानास्ति अर्थात् असहृदयैरपि गूढार्थः अवबुध्यते तत्र गूढार्थस्य सर्वजनबोध्यत्वादगूढाख्यं गुणीभूतव्यङ्ग्यम् । व्यङ्ग्यार्थस्य स्थितिविषये उक्तं यत्—

"नान्ध्री पयोधर इवातितरां प्रकाशः
नोगुर्जरीस्तनइवातितरां निगूढः
अर्थोगिरामपिहितःपिहितश्च कश्चित्
सौभाग्यमेति मरहट्टवधूकुचाभः"

अर्थान्तर संक्रमितवाच्ये अगूढस्य उदाहरणम्—

"यस्यासुहृत् कृततिरस्कृतिरेत्य तप्त-
सूचीव्यध व्यतिकरेण युनक्तिकर्णौ ।
काञ्ची गुण ग्रथनभाजनमेष सोऽस्मि
जीवन्न संप्रति भवामि किमावहामि"

वक्ष्माण पद्ये "जीवन्न" इति पदं प्रशंस्यजीवनत्वरूपे अर्थान्तरे संक्रमितं भवति। अस्मादेव अर्थान्तर रूपात् मृत्युः श्रेयस्कारः इति व्यङ्ग्यं असहृदयैरपि बोध्यं भवति। अतः इदं अर्थान्तर संक्रमित वाच्यस्य अगूढाख्यव्यङ्ग्यस्य उदाहरणम्।

अत्यन्ततिरस्कृत वाच्ये—

"उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा गायन्ति मञ्जुमधुपागृहदीर्घिकासु।
एतच्चकास्ति च रवेर्नवबन्धुजीव पुष्पच्छदाभमुदयाचलचुम्बिबिम्बम्"

"उदयाचलचुम्बि" इति योगात् चुम्बनस्य मुखसंयोगः मुख्योऽर्थः। परन्तु चेतन रहिते रविबिम्बे अन्वयाभावात् बाधित सन् संयोग मात्रं लक्षयति अतः अत्रात्यन्त तिरस्कृत वाच्यम्। अस्मादेव "प्रातःकालः समागतः" इति व्यङ्ग्यं अत्यन्तमगूढम्।

२- अपरस्याङ्गम्—

"अयं सरशनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवी विस्रंसनः करः।"

रणाङ्गने भूरिश्रवसः छिन्नकरमवलोक्य तत् वधूनां विलाप प्रसङ्गात् अत्र करुणरसः अङ्गी। परन्तु शृङ्गार रसः कविना अङ्गत्वेनावस्थापितः। अतः मुख्यस्याङ्गीभूतस्य करुणस्य अङ्गत्वेन शृङ्गारस्यावस्थापनात् अपरस्याङ्ग गुणीभूतव्यङ्ग्यत्वम्। रसगङ्गाधरकारपण्डितराजस्य मतेन इदं ध्वनिकाव्यम्।

३- वाच्यसिद्ध्यङ्गम्—

"भ्रमिमरतिमलसहृदयतां प्रलय मूर्च्छां तमःशरीरसादम्
मरणं च जलदभुजगजं प्रसह्यकुरुते विषवियोगिनीनाम्"

पद्येऽस्मिन् 'जलद इव भुजगः' इति रूपकालङ्कारस्य वाच्यस्य सिद्धिः न तावत् भवति यावत् जलवाचकेन विषेण हालाहलं न व्यज्यते । प्रदीपानुसारं— अत्र पद्ये हालाहलरूपः विषार्थः व्यङ्ग्यः । अयं व्यङ्ग्यः 'जलदभुजग' इति रूपकस्य सिद्धिं करोति अतः अत्र वाच्यसिद्ध्यङ्गगुणीभूतव्यङ्ग्यमिति मन्तव्यम् ।

४- अस्फुटम्—"अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेद भीरुता
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ।"

प्रेमिकं प्रति प्रेमिकाया उक्तिरियम् । हे प्रिय ! तवादर्शनात् मे मनसि उत्कण्ठा जायते । अपिच यदा दृष्टिपथमायासि तदा पुनः विच्छेदो भविष्यतीति भीतिरुदेति । अतः भवतः दर्शनेनादर्शनेन च मया नानुभूयते सुखम् । इति वाच्यः ।

अस्मादेव व्यज्यते यत— भवान् यथा अदृष्टो न भवेत् अपिच दृष्टे सति यथा भवत् विच्छेदो न भवेत् तथा करणीयमिति । परन्तु सामाजिकानां कृते न स्पष्टतया एतदवभासते । अतः अस्फुटाख्यं गुणीभूतव्यङ्ग्यम् ।

५- संदिग्धम्—

"हरस्तु किञ्चित् परिलुप्तधैर्यः चन्द्रोदयारम्भ इवाम्बुराशिः
उमामुखे विम्बफलाधरोष्ठे व्यापारमास विलोचनानि" ॥

तपोभङ्गानानन्तरं पार्वतीमुखावलोकनात् शिवस्य लोचनव्यापारणं तथा तत्मुखचुम्बनेच्छा इति द्वयोर्मध्ये कतरं प्रति शिवस्य इच्छा इति सन्देहः । पृथग्त्वेन उभयो विश्रामाभावात् न तुल्यप्राधान्यम् ।

अस्मादत्र सन्देहयोगात् संदिग्धाख्यं गुणीभूतव्यङ्ग्यम् ।

६- तुल्यप्राधान्यम्—

"ब्राह्मणातिक्रमत्यागो भवतामेवभूतये
जामदग्न्यस्तथामित्रमन्यथा दुर्मनायते ।"

जमदग्निपुत्रः ( परशुरामः ) दुर्मनायते इति कथनेन दुःखितोभवेत् ब्राह्मणानिष्टयोगेन एकाधिकविंशतिवारं यथा पृथिवीं निःक्षत्रियां कृतवान् तथा भवतां (रक्षसां) अपि क्षयं करिष्यतीति उभयोः प्राधान्यं तुल्यमिति कृत्वा तुल्य प्राधान्यम् । अतः गुणीभूतव्यङ्ग्यम् ।

७- काक्वाक्षिप्तम्—

मथ्नामि कौरवशतं समरे न कोपात्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू-
संधिं करोतु भवतां नृपतिः पणेन ॥

"भिन्नकण्ठध्वनिर्धीरैः काकूरित्यभिधीयते" युद्धक्षेत्रे कुरुकुलक्षयं विधास्यामीति बद्धप्रतिज्ञस्य भीमस्य 'न मथ्नामीति' उक्तिः सद्यः बाधिता सती मथ्नामीति अर्थं प्रकाशयति । निषेधरूपात् विधिरूपोऽर्थः अयं काक्वाक्षिप्तः । अतः काक्वाक्षिप्तगुणीभुतव्यङ्ग्यमिदं काव्यम् ।

आर्थव्यञ्जनानुसारं काकूस्थाने व्यङ्ग्यत्वं भवति । अत्र कथं तत्योगेन गुणीभूतव्यङ्ग्यं ? इति न शङ्कनीयम् । तत्र ( आर्थव्यञ्जना स्थले) काक्वा कर्थप्रतीतिर्विलम्बेन जायते । अत्र तु सद्यः इति भेदः ।

८- असुन्दरम्—

"वानीर कुञ्जोड्डीन शकुन कोलाहलं शृण्वन्त्याः
गृहकर्मव्यापृतायाः वध्वाः सीदन्ति अङ्गानि।"

"शकुनि कोलाहलं शृण्वन्त्याः वध्वाः अङ्गानि सीदन्ति" इति वाच्यार्थः "कुञ्जमध्ये कश्चित् प्रविष्टः" इति व्यङ्ग्यम्। कस्यचित् कुञ्जे प्रवेशानन्तरं तद्भीया पक्षिणः पलायन्ते। वाच्यार्थात् व्यङ्ग्यार्थस्य अप्राधान्यात् (असुन्दरतायोगेन) गुणीभूतव्यङ्ग्यत्वम्।

**प्रश्नः २८- वादिमतनिरसनपूर्वकं मम्मटोक्तव्यञ्जनावृत्ति-स्थापनं करणीयम् ?**

उत्तरम्— वाग्देवतावतारः आचार्यमम्मटः महान् व्यञ्जना-वादी। काव्यप्रकाशे सः प्रतिपादयति व्यङ्ग्यार्थः स्वतन्त्रः। सः व्यञ्जनया बुध्यते। व्यङ्ग्यार्थः नान्यत्रान्तर्भावितां भजते। अतः सः वक्ष्यमाणक्रमेण वादिमतं खण्डयित्वा व्यञ्जनां स्थापयति—

मीमांसकमतखण्डनम्— ये केचन मीमांसकाः प्रतिपादयन्ति "नैमित्तिकानुसारं निमित्तानि कल्प्यन्ते" तन्न चतुरस्रम्। अर्थात् शब्दश्रवणानन्तरं यावान् अर्थः बुध्यते तत्र शब्दः निमित्तम्। अनेन शब्दानुसारेण यः अर्थः प्रतीतिपथमवतरति सः नैमित्तिकः। अतः व्यञ्जनावृत्त्या को लाभः ? इति पूर्वपक्षः।

परमतशकलीकरणे शफलीकरणेनानेन मम्मटेनात्र प्रदीयते समुत्तरम्— यत् अत्र निमित्तत्वं कारकत्वं वा ज्ञापकत्वम् ? शब्दः अर्थं प्रकाशयति, न तु जनयति। अतः न शब्दस्य कारकत्वम्। अपिच "अस्मात् शब्दात अयमर्थोबोधव्यः" इति यावत् कालं न भवति

तावत्कालं शब्दस्य ज्ञापकत्वं कुतः सम्भवेत्। अर्थात् व्यङ्ग्या[illegible] स्थितौ शब्दस्य ज्ञापकत्वं सम्भवेत्। परन्तु व्यञ्जनायाः अस्वीक[illegible] तत् न भवेत्। यथा अभिधाव्यापारः वाच्यार्थाय लक्षणा व्या[illegible] लक्ष्यार्थाय च निमित्तं भवति तथा अत्रापि कोऽपि व्या[illegible] स्वीकरणीयः। सः व्यापारः व्यञ्जनाव्यापारं हित्वा नान्यः। [illegible] व्यञ्जनानाम्नी शक्तिः स्वीकर्तव्या।

यत्परशब्दः स शब्दार्थः—सोऽयमिषोरिवदीर्घदीर्घतरः अभि[illegible] व्यापारः। इत्यस्य खण्डनम्— एतयोर्मतयोरयमेव सारः यत्—ए[illegible] वाक्यस्य उच्चारणानन्तरं अन्तिमार्थं यावत् सर्वं अभिधा बोध[illegible] समर्था। अर्थात् "निःशेषच्युतचन्दनं स्तनतटम्" इत्यादौ तद[illegible] रन्तुं गतासि इति व्यङ्ग्यार्थमपि अभिधा बोधयेत्। यत्र वक्तृता[illegible] तदेवाभिधाव्यापारगम्यम् अपिच बलवता सैनिकेन क्षिप्तः शरः[illegible] तद् वर्म निर्भिद्य प्राणानपि हरति तथा अभिधाव्यापारः वाच्[illegible] प्रकाश्य व्यङ्ग्यार्थमपि प्रकाशयेत्। इति वादिनां मतम्।

मम्मटः एतत् न स्वीकृत्य प्रकाशयति यदि यत्परः शब्द[illegible] शब्दार्थः तर्हि 'पूर्वो धावति' इतिस्थले 'अपरः धावति' इति क[illegible] संगच्छेत्। यदि अपरः नास्ति तर्हि पूर्वस्य पूर्वत्वं कुतः सम्भवे[illegible] अतः यत् परः शब्दः स शब्दार्थः इत्यस्य अयमेव अर्थः यत् उपा[illegible] (उच्चारितस्य) शब्दस्य प्रथमार्थे तात्पर्यं न तु प्रतीति-अर्थमा[illegible] अर्थात् निःशेष इत्यादौ तस्यान्तिकं न गता परन्तु वापीं गता इ[illegible] 'यत्परशब्दः स शब्दार्थः' इत्यस्यान्तर्भावतां भजते। परन्तु प्रती[illegible] पथमागतस्य 'तस्याधमस्यान्तिकं गता' इत्यर्थः न यत्परशब्दः...

इत्यस्य अन्तर्भावितां भजते ।

यत् विधेयत्वं तत्र वक्तुस्तात्पर्य्ययोगात् स एव वाक्यार्थः ।

विषं भक्षय, "माचास्य गृहे भुंक्था." इत्यस्य मित्र वाक्यात् तथा "च" कार योगात् एकवाक्यतया अस्य गृहे न भोक्तव्यं इत्यर्थः प्रकाशी भवति । अयमर्थः न प्रतीत्यर्थः । अयं तु उपात्तशब्दस्यार्थः ।

इषे रिव-इत्यस्य खण्डनम्— ब्राह्मण ते पुत्रः जातः, कन्या-गर्भिणीजाता इति श्रवणानन्तरं ब्राह्मणस्य हर्षदुःखयोर्भावः कथं अभिधया वोध्यः न भवति? यतः वादिनां मतानुसारं अभिधा एकः एव व्यापारः यः सर्वमर्थं वोधयति । परन्तु "ब्राह्मण ! ते ... इतिस्थले ब्राह्मणस्य सुख दुःखभावः मुख-विकास-मलिनतया अनुमीयते । यत्र नाभिधा एतदर्थं वोधयति ।

किञ्च अभिधा व्यापारेण यदि सर्वार्थज्ञानं स्यात् तर्हि जैमिनिना स्वीकृतस्य "श्रुतिलिङ्ग वाक्य प्रकरण स्थानसमाख्यानां पूर्वपूर्व-वलियस्त्वमित्यस्य" साधुता दुष्टास्यात् अतः नितरामेव व्यञ्जना व्यापारस्यावश्यकता वरीवर्तते ।

**प्रश्नः २९- "ध्वन्यमानार्थः नानुमानान्तर्भावितां भजते" इत्यस्य प्रतिपादनं मम्मटोक्त दिशा विधेयम् ।**

उत्तरम्— व्यक्तिविवेककारिणामहिमभट्टेनाभ्यधायि, यः ध्वन्यर्थः सः अनुमानगम्यः । अतः ध्वनिरिति अपूर्वपदार्थः न

ग्राह्यः। इति कृत्वा आनन्दवर्धनप्रतिपादितः ध्वनिः अनेनानुमाने नान्तर्भुक्तः।

तत्परवर्तिना मम्मटेन एतत् खण्डितम्। मम्मटमतेन सहृदय-चमत्कारकारी ध्वनिः स्वतन्त्रतया वर्तते। सः अनुमानेन न बोध्य। अनुमानं तावत् पक्षसाधनसाध्ययोगात् सम्भवेत्। अर्थात् "पर्वतो वह्निमान् धूमात्" इति स्थले पर्वतः पक्षः। वह्निः साध्यः। धूम साधनम्। एतत्सकाशात् पर्वते अग्निरस्तीति अनुमानेन ज्ञायते। यदि हेतुः दुष्टः स्यात् तर्हि हेत्वाभासयोगेन अनुमानं नैव सम्भवति। यथा—

"भ्रमधार्मिक विस्रब्धं सश्वाऽद्य मारितस्तेन
गोदानदी कच्छ कुञ्ज वासिना दृप्त सिंहेन"

अत्र गोदावरी कुञ्जः पक्षः। भ्भीरुभ्रमणायोग्यः साध्यः। सिंह योगात् इति हेतुः। अर्थात् गोदावरी कुञ्जः भीरुभ्रमणायोग्य सिंहयोगादिति अनुमानं अत्र न भवेत्। हेतौ दोषदर्शनात्। यदि गुरुरादिशति अथवा स्वाभिमुखी कृत्य प्रिया चेत् वदेत् तर्हि भीरु अभिशापभयात् वा प्रेयसी प्रेमाधिक्यात् तत्र कुञ्जे नूनं संचरेत्। तत्र वर्ततां नाम सिंहः। अतः सिंह योगात् गोदावरी कुञ्जः भीरुभ्रमणा-योग्यः इति यदुक्तं तत् मिथ्या जातम्। विद्यमानेऽपि सिंहे गुरुनिर्देशेन प्रियावचनेन वा भीरोभ्रमणात्। अस्मात् अत्र हेत्वाभासः जातः हेत्वाभास योगेन इदं नानुमान गम्यमिति महिम भट्ट मतं निरस्तम्।

प्रश्नः ३०- शब्दार्थालङ्कारविषये पूर्वाचार्य्याणां मतं मम्मटेन केनप्रकारेण आलोचितम् ?

उत्तरम्— अलङ्करोति, भूषयति, इति व्युत्पत्त्या अलमुपपदात् कृधातोः घञ् प्रत्ययेनालङ्कार शब्दस्यनिष्पत्तिः । काव्ये अलङ्कारस्य प्राधान्य विषये यदा केचन अर्थालङ्कारं प्रति अङ्गुलिं दर्शयन्ति तदा अपरे केचन शब्दालङ्कारं प्रति कटाक्षं निक्षिपन्ति । अर्थालङ्कार पक्षपातिनां उक्तिरियं—

"रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः
न कान्तमपि निर्भूषं विभाति वनिताननम्"

यथा काव्ये अर्थालङ्काराणां स्थितिं सुदृढां करोति तथा शब्दालंकारवादिनामपि युक्तिः—

"रूपकादिमलङ्कारं वाह्यमाचक्षते परे।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम्"
तदेतदाहुः सौशब्द्यं नार्थ व्युत्पत्तिरीदृशी"

काव्ये शब्दालङ्कारस्य स्थितिं द्रढयति । अर्थालङ्कारवादिनां अयमभिप्रायः यत् रूपकादयः अर्थालङ्काराः काव्ये मुख्याः । सुन्दरमपि नायिका मुखं अलङ्काररहितं सत् यथा न शोभते तथा अर्थालङ्कार रहितमपि काव्यम् ।

शब्दालङ्कार वादिनामयमभिप्रायः यत् रूपकादयः वाह्यालङ्काराः । परन्तु मुख्यतया स्थितानां शब्दालङ्काराणां

शब्दालङ्कारताकाव्ये भूरितयावर्तते । अतः काव्ये शब्दालङ्कार प्राधान्यमवश्यमङ्गीकर्तव्यम् ।

परन्तु उभयपक्षपाती मम्मटः न केवलं शब्दालङ्कारं अर्थालङ्कारं सम्मानयति । अपितु काव्ये उभयोः प्राधान्यं करोति । तेनाङ्गीकृतमादौ—

"शब्दार्थौ काव्यमिति"

सिद्धान्तदिदित्सुः सः मतं प्रकाशयति—

शब्दालङ्कार प्राधान्ये—"शब्दाऽभिधेयालङ्कार भेदादिष्टं द्वयं तु"

"प्रथम मरुणच्छायस्तावत्ततः कनकप्रभः
स्तदनु विरहोत्ताम्यत्तन्वी कपोल तलद्युतिः
उदयति ततोध्वान्तध्वंस क्षमः क्षणदामुखे
सरस बिसिनी कन्दच्छेदच्छविर्मृगलाञ्छनः"

श्लोकेऽस्मिन् मकार तकार ककार घकार क्षकार च्छकार ह लकाराणां । साम्यात् अनुप्रासः शब्दालङ्कारः प्रधानम् । यावत् कवेरभिप्रायात् । अत्र अनुप्रासः काव्यस्य शोभाधायकः ।

अर्थालङ्कारप्राधान्ये—

ते दृष्टिमात्र पतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च
नीचाः सदैव सविलासमलीक लग्ना
येकालतां कुटिलतामिव न त्यजन्ति ।

क्षोभरूपस्य एककार्यस्य सिद्ध्यर्थं अलकखलयोः समुच्चयेन कथनात् समुच्चयालङ्कारोत्र। अयमेवार्थालङ्कारः। यद्यपि अलीकशब्दस्य परिवृत्ति-असहत्वेन शब्दश्लेषस्य सम्भवः तथापि गुणीभूतत्वेन तत् वर्तनात् न मुख्यता। अर्थालङ्कार प्राधान्यमपि इत्थं काव्यं भूषयति। अतः काव्यशरीरे उभयोः प्राधान्यं अङ्गीकर्तव्यमिति दिक्।

**प्रश्नः ३१—दोषस्य स्वरूपं विलिख्य पदगतदोषान् उदाहरण द्वारेण संगमयत ?**

उत्तरम्— "मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयात् वाच्यः
उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः"

मुख्यार्थस्य हतिरपकर्षः यस्मात् सः मुख्यार्थहतिः। अर्थात् दोषः मुख्यपदेन रसस्य परामर्शः। विश्वनाथमतेन 'रषापकर्षकाः दोषाः' अर्थात् ये रसस्यापकर्षं जनयन्ति त एव दोषाः।

प्रथमतः दोषस्य नित्यानित्यत्वभेदेन भेदद्वयमस्ति। नित्यानित्यत्वभेदेन विभक्तोयं दोषः शब्दार्थरसदोषभेदेन त्रिप्रकारको भवति। शब्ददोषः अपि पदपदांश वाक्यगतत्वेन त्रिविधः।

सांप्रतं शब्ददोषगत पदगत दोषाः प्रदीयन्ते—

"दुष्टं पदं श्रुतिकटुच्युतसंस्कृत्यप्रयुक्तमसमर्थम्
निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाश्लीलम्।
सन्दिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम्
अविमृष्ट विधेयांशं विरुद्धमतिकृत् समासगतमेव"

१– श्रुतिकटुत्वम् "अनङ्ग मङ्गल गृहापाङ्गभङ्गितरङ्गितैः
आलिङ्गितः स तन्वङ्ग्या कातार्थ्यं लभते कदा"

कृतार्थस्य भावः कातार्थ्यम्। एतत् पदं श्रुतिकटु। केवलं पदगत-योगात् अत्र कातार्थ्यमिति श्रुतिकटुत्वं दोषः।

२- च्युतसंस्कृतित्वम्—

"एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते।
लत्पल्ली पति पुत्रि! कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथतेकुचयुगं पत्रावृतं मा कृथाः" ॥

'आशिषिनाथः' इति वार्तिकानुसारं याचनार्थे आत्मनेपदविधानम् कर्तव्यम्। परन्तु अत्र प्रार्थनार्थत्वात् याच् धातोः परस्मैपदविधानं करणीयम्। एतदभावात् अर्थात् याच् धातोः आत्मनेपदविधानात् च्युतसंस्कृतित्वं दोषः। अत्र अनुनाथतिस्तनयुगमिति पठनीयम्।

३- अप्रयुक्तता— कोशादौ विद्यमानेऽपि कविभिरप्रयुक्तत्वात् अस्य दोषस्यावकाशः भवति। यथा—

"यथायं दारुणाचारः सर्वदैव विभाव्यते
तथामन्ये दैवतोऽस्य पिशाचो राक्षसोथवा"

अमरकोशानुसारं "वृन्दारको दैवतानि पुंसिवा देवतास्त्रियाम्" यद्यपि दैवतशब्दः पुंलिङ्गे व्यवहर्तव्यः इति नियमोवर्तते तथापि न केनचित् कविना पुंलिङ्गे दैवतशब्दः व्यवहृतः। अतः अप्रयुक्तता दोषः।

४- असमर्थता— यस्य पदस्य प्रयोगः यदर्थं प्रतिभवति यदि तमर्थं बोधयितुं तस्य शक्तिर्नभवति तर्हि असमर्थता दोषः भवति।

यथा— "तीर्थान्तरेषु स्नानेन समुपार्जित सत्कृतिः
सुरस्रोतस्विनीमेष हन्ति संप्रति सादरम्" ॥

"हन् गतिहिंसयोः" इति यद्यपि वर्तते तथापि हन्तिपदं गमनार्थं न बोधयति "हन्ति" इति हन् धातुः हिंसार्थं यथा बोधयति तथा गमनार्थं प्रति न। अतः असमर्थता दोषः।

५- निहतार्थता— यत्र कश्चित् शब्दः प्रसिद्धार्थं विहाय अप्रसिद्धार्थं प्रतिकारणं भवति तत्र निहतार्थता दोषः भवति।

यथा— "यावकरसार्द्र पादप्रहारशोणित कचेन दयितेन
मुग्धासाध्वस तरला विलोक्य परिचुम्बिता सहसा"

उदाहृते पद्ये शोणितशब्दः उज्ज्वलीकृतेऽर्थे कविना न्यस्तः। शोणित-शब्दस्यार्थः रुधिरार्थे प्रसिद्धः। परन्तु एतदर्थं विहाय उज्ज्वलार्थ-बोधनात् शोणितशब्दे निहतार्थता दोषः जातः।

६- अनुचितार्थता—

तपस्विभिर्या सुचिरेण लभ्यते
प्रयत्नतः सत्रिभिरिष्यते च या
प्रयान्ति तामाशुगतिं यशस्विनो-
रणाश्वमेधे पशुतामुपागतः।

वक्ष्माणश्लोके योद्धृणां वीरत्ववर्णनप्रसङ्गे "पशुतामुपागताः" इति पशुपदं प्रयुक्तं सत् वीराणां कातरतामभिव्यनक्ति। यथा बलीभूतेषु छागेषु भयभावः नितरां वर्तते तथा तैसाकं एतेषां वीराणां तुलनात् भीतिभावो व्यज्यते। अतः वीरवर्णनप्रसङ्गे पशुपदस्थापनात् अयं दोषः भवति।

७- निरर्थकता—

"उत्फुलकमलकेसर परागगौरद्युते ममहि गौरि
अभिवांछितं प्रसिद्ध्यतु भगवति युष्मद् प्रसादेन"

उदाहृते पद्ये हि शब्दः निरर्थकः। केवल पादपूरणार्थं अस्य प्रयो[illegible] भवति। रामायणमहाभारतादिग्रन्थेषु एतादृग् शब्दानां बहुप्रयो[illegible] वर्तते।

८- अवाचकता—

अबन्ध्य कोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः
अमर्शशून्येन जनस्य जन्तुना न जात हार्देन न विद्विषादरः।

अस्मिन्श्लोके जन्तुपदमदातरि अर्थे व्यवस्थापितम्। परन्तु जन्तु[illegible] अदातृ अर्थं न बाधयति अतः जन्तुपदं अदातरि अर्थे अवाचकमि[illegible] कृत्वास्य दोषस्यावकाशोत्र भवति।

९- अश्लीलता—श्रियं, शोभां लातीति व्युत्पत्त्या श्रीलशब्द[illegible] निष्पन्नः। न श्रीलमित्यश्लीलम्। रलयोरभेदात्। अश्लीलता दो[illegible] ब्रीडाजुगुप्सामङ्गलत्वभेदेन त्रिधा। क्रमेण उदाहि[illegible] ब्रीडाव्यञ्जकत्वे—

साधनं सुमहत् यस्य यन्नान्यस्य विलोक्यते।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम्।

पद्येऽस्मिन् "साध्यते, संपाद्यते सुरतकार्य्यमनेनेति व्युत्पत्त्या साध[illegible] शब्दस्य अर्थः लिङ्गं भवति। अपिच साध्यते, संपाद्यते शत्रुविज[illegible] रूप कार्य्यमिति व्युत्पत्त्या साधनशब्दः सैन्यं बोधयति। साधन[illegible] शब्दः यदा लिंगमर्थं प्रकाशयति तदा पुरुषलिङ्गार्थद्योतनतया ब्रीड[illegible] दायीति ब्रीडाव्यञ्जकाश्लीलता दोषः।

जुगुप्सागताश्लीलता—

लीलातामरसाहतोन्यवनिता निःशङ्क दष्टाधरः
कश्चित् केसर दूषितेक्षण इव व्यामील्यनेत्रेस्थितः
मुग्धा कुड्मलिताननेन ददती वायुं स्थितातत्र सा
भ्रान्त्याधूर्ततयाथ वानतिमृते तेनानिशं चुम्बिता ।

अत्र वायुशब्दः अपान वायुं (पर्दनम्) स्मारयति । अतः जुगुप्सागतं अश्लीलत्वम् ।

अमङ्गलगताश्लीलता—

"मृदुपवन विभिन्नो मत्प्रियाया विनाशात्
घनरुचिर कलापोनिःसपत्नोद्य जातः
रतिविगलितवन्धे केशपाशे सुकेश्याः
सति कुसुम सनाथे कं हरेदेषवर्ही"

अत्र यद्यपि विनाशशब्दः कविना अदृश्यरूपार्थे अवतारितः तथापि एकस्य मरणानन्तरं दर्शनाभावात् मरणरूपार्थं अपि विनाशं शब्दः प्रकाशयति । अस्मात् मरणरूपामङ्गलार्थ वोधनात् अमङ्गलरूपाश्लीलतादोषः ।

१०- संदिग्धतादोषः—

"आलिङ्गितस्तत्रभवान्संपराये जयश्रिया
आशीः परंपरां वन्द्यां करणे कृत्वा कृपां कुरु"

अत्र वन्द्यामिति यत्पदं वर्तते तत् किमु वन्दो शब्दस्य सप्तम्येकवचने उत वन्द्याशब्दस्य द्वतीयैकवचने प्रयुक्तमिति संदेहः जायते । अतः संदिग्धातादोषः ।

११- अप्रतीतता दोषः—

"सस्यच ज्ञान महाज्योतिर्दलिताशयताजुषः।
विधीयमानमप्येतत् न भवेत् कर्म बन्धनम्।"

योगशास्त्रे आशय शब्दः वासनार्थे लब्ध प्रतिष्ठः। शास्त्रान्तरे एतादृश प्रयोगाभावात् तथा पठनमात्रेण सद्यः तदर्थं प्रति प्रतीति अभावात् अप्रतीतता दोषः।

१२- ग्राम्यतादोषः—

"राकाविभावरी कान्त संक्रान्तद्युतितेमुखम्
तपनीयशिला शोभा कटिश्च हरते मनः"

विदग्धेतरप्रयुक्तकटिशब्दे ग्राम्यता दोषः वर्तते। श्रोणीनितम्बादि-पदानि विदग्धप्रयोज्यानि। अतः अत्र ग्राम्यता दोषः।

१३- नेयार्थता दोषः— नेयः, बलात्कारेण प्रापणीयः अर्थः यस्य तस्य भावः। अर्थात् रूढिप्रयोजनाभ्यां विना यत्र लक्षणा प्रसरेत् तत्र अस्य दोषस्यायतनम्। यथा—

"शरत्काल समुल्लासि पूर्णिमाशर्वरीप्रियम्
करोति ते मुखं तन्वि! चपेटापातनातिथिम्"

अत्र तन्वङ्ग्याः मुखे चन्द्रः चपेटाघातं करोति इति योगेन मुखेन चन्द्रः निर्जितः इति लक्ष्यते। परन्तु इय लक्षणा न रूढ़िमूला वा प्रयोजनमूला अस्मात् रूढ़िप्रयोजनहीन लक्षणा योगात् नेयार्थता दोषः भवति।

१४- क्लिष्टता—यत्र कृच्छ्रेणार्थः प्रतीयते तत्र क्लिष्टता दोषः भवति। यथा— "अत्रिलोचनसम्भूतज्योतिरुद्गमभासिभिः
सदृशं शोभतेऽत्यर्थं भूपाल! तवचेष्टितम्"

अत्र श्लोके "अक्षि लोचन सम्भूतः, चन्द्रः, तद्ज्योतिभिः, किरणैः, भासिभिः, विकसन शीलैः इन्दिवरैः इत्यर्थः कष्टेन ज्ञायते । अतः क्लिष्टता दोषः ।

१५- अविमृष्ट विधेयांशता—

"मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलत् रक्तसंसक्तधारा
धोतेशाङ्घ्रिप्रसादोपनतजयजगत् जातमिथ्यामहिम्नाम्
कैलासोल्लासनेच्छा व्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत् प्रयासः"

अविमृष्टः, प्रधानतया अनिर्दिष्टः, विधेयांशः यत तत्र अयं दोषः भवति । अर्थात् वाक्ये द्वौ अंशौ स्तः । एकः विधेयः अपरः उद्देश्यम् । वाक्ये प्रधानांशः विधेयः । विधेयस्य सिद्धये यस्यांशस्य प्रयोगः सः अंशः उद्देश्यम् । यथा— "यस्तु क्रियावान् पुरुषः स विद्वान्" इति वाक्ये सः विद्वान्" इति विधेयांशः । एतस्य पुष्ट्यर्थं "यस्तु क्रियावान्" इत्यंशस्यावतारणं कृतम् । एतदेव उद्देश्यम् । यत्र एतयोः वैपरीत्येन न्यासो भवति, अर्थात् "अनुवाद्यमनुक्त्वा एव न विधेयमुदीरयेत्" इत्यस्य व्यतिक्रमः भवति अथवा समास योगेन विधेयांशस्य न सम्यग् परामर्शः भवति तत्राविमृष्ट विधेयांशता दोषः भवति ।

उदाहृते पद्ये, मस्तकानां बाहुनां च एतत् फलमनुचितम् । अतः महिमा मिथ्या जातः । इति कृत्वा विधेयस्वरूपेण मिथ्यां वर्तते । तुरः स्पष्टतया एतत् न भासते । महिम्नासाकं तस्य समास

योगात् प्राधान्येनाविवक्षा जाता। यदि उद्देश्य विधेययोःपृथ निर्द्देशः स्यात् तर्हि तयोः पृथग् ज्ञानं संभवेत्। परन्तु एतद नभवति। अतः अविमृष्ट विधेयांशता दोषः।

१६- विरुद्धमतिकारिता—

"सुधाकर कराकार विशारद विचेष्टितम्
अकार्य्य मित्रमेकोऽसौ तस्य किं वर्णयामहे"

यथा मक्षिकाणामभावः निर्मक्षिकं तथा कार्य्यस्याभावः अकार्य मिति, तेन मित्रमकार्य्यमित्रमिति विवक्षायां अकार्य्यमित्रं (कुत्सित कार्य्ये मित्रम्) इति विरुद्धमत्युद्रेकात् विरुद्धमतिकारिता दोषः अ भवति।

**प्रश्नः ३२- वाक्यगतश्रुतिकटुत्वादीनां दोषाणां संगमनं उदाहरणेषु क्रियताम्।**

उत्तरम्– वाः श्रुतिकटुत्वम्–

"सोऽध्यैष्टवेदान् त्रिदशानयष्टपितॄनताप्सीत् सममंस्तबन्धून्
व्यजेष्टषड्वर्गमरंस्तनीतौसमूलघातंन्यवधीदरींश्च"

अत्र अध्यैष्ट, अयष्ट, अतार्पसीत्, व्यजेष्ट, अरंस्त, इत्यादीनिपदानि श्रुति-उद्वेग जनकानीति श्रुतिकाटवदोषः।

वाः अप्रयुक्तता–

"सरातुदो दुश्च्यवनो भावुकानां परंपराम्
अनेड़मूकतादैश्च द्यतु दोषैरसंमतान्।"

"संक्रन्दनोदुश्च्यवनस्तुराषाट् मेघवाहनः" इति कोषप्रमाणं यद्यपि वर्तते, अपिच "एडमूकः स्मृतोधीरैः शठेवाक्स्मृतिर्वर्जिते" इति विद्यमातेऽपि न केनचित् कविना दुश्च्यवनशब्दः इन्द्रार्थे तथा अनेड मूक शब्दः मूकबधिरार्थे प्रयुक्तः। अतः अप्रयुक्तता दोषः।

वाः निहतार्थता—

"सायक सहाय बाहोर्मकरध्वजनियमितक्षमाधिपतेः
अब्जरुचिभास्वरस्ते भातितरामवनिप ! श्लोकः"

अत्र सायक मकरध्वजक्षमाब्जश्लोक शब्दाः शरमदनक्षान्ति पद्मपद्येषु अर्थेषु व्यवहृताः। परन्तु एतान् अर्थान् प्रति प्रसिद्धिवाहुल्याभावात् अत्र निहतार्थता दोषः।

वाः अनुचितार्थता—

"कुविन्दस्त्वं तावत् पटयसि गुण ग्राममभितो
यशोगायन्त्यैते दिशिदिशि च नग्नांस्तव विभो !
शरत् ज्योत्स्ना गौर स्फुट विकट सर्वाङ्ग सुभगा
तथापि त्वत् कीर्त्तिर्भ्रमति विगताच्छादनमिह।"

अत्र कुविन्दादयः शब्दाः तन्तुवायार्थे निमित्ती भवन्ति। परन्तु कुं, पृथिवीं, विन्दति जानातीति व्युत्पत्त्या रजरूपार्थेऽपि पूर्वोक्ताः शब्दाः नियन्त्रिता भवन्ति। येन राज्ञः उत्कर्षः न्यूनी भवन्ति। राज्ञः स्तुतिपाठकाले तन्तुवायार्थस्य ज्ञानता राज्ञः उत्कर्ष हानिर्भवति। अतः अनुचितार्थता दोषः।

वाः अवाचकता—

"प्राभ्रभाट् विष्णु धामाप्यविषमाश्वः करोत्ययम्
निद्रां महस्र पर्णानां पलायन परायणाम्"

अत्र प्राभ्रभाट्; विषमाश्वविष्णुधामादि शब्दाः प्रकृष्ट जलदसप्ताश्व गगनादि अर्थानाम वाचकाः। अतः अवाचकत्वं दोषः।

वाः व्रीड़ाश्लीलता—

"भूपते रुपसर्पन्ती कंपना वामलोचना
तत् तत् प्रहरणोत्साहवतीमोहन मादधौ।"

अत्र श्लोके उपसर्पन्ती, प्रहरणं, मोहनमिति शब्दाः क्रमशः रतोद्यता, स्वजघनेन पुरुषजघनताडनं तथा सुरतक्रीडादिशयमिति अर्थान् प्रतिपादयन्ति। अतः वाक्यगत व्रीडाश्लीलतादोषः।

वाः जुगुप्माऽश्लीलता—

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गञ्च भुंजते
इतरार्थ ग्रहे येषां कवीनां स्यात् प्रवर्तनम्

अत्र वान्तशब्दः परोत्सर्गशब्दश्च च्छर्दितपुरीषार्थकतया (वान्ति तथा मल) जुगुप्सा प्रदायी। अतः अत्र जुगुप्साऽश्लीलता दोषः।

वाः अमङ्गलाश्लीलता—

"पितृवसतिमहं व्रजामि तां सह परिवार जनेन यत्र मे
भवति सपदि पावकान्वये हृदयमशेषित शोक शल्यकम्"

उदाहृते पद्ये "पितृवसतिं" तथा "पावकान्वये" इति शब्दौ श्मशानं तथा "अग्निसंयोगं" इति अर्थं प्रकाशयति। अमङ्गल योगात् अत्र अमङ्गलाश्लीलता दोषः।

(मरणानन्तरं शवसत्कारांय श्मशाने अग्निसंयोगः क्रियते)

वा: संदिग्धता—

"सुरालयोऽल्लासपरः प्राप्तपर्य्याप्त कंपनः
मार्गणप्रवणोभास्वत् भूति रेष विलोक्यताम्"

श्लोके अस्मिन् 'सुरालयः' इति सुराणामालयः (देवालयः) अथवा सुरायाः आलयः (मदिरालयः) इति संदेहः । अपिच "मार्गणप्रवणः" इत्यत्र मार्गणेषु (बाणेषु) प्रवणः, तत्परः, उत याचने तत्परः इति संदेहः अतः वाक्यगत संदिग्धता दोषः ।

वा: अप्रतीतत्वम्—

"तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः
दृढभूमिः प्रिय प्राप्तौ यत्नः स फलितः सखे !

अत्र व्यवहृताः शब्दाः आधिमात्रोपायाः योगशास्त्रे सुप्रसिद्धाः । योगशास्त्रं विहाय इतर शास्त्रेषु प्रयुक्तानामेषां शब्दानां अर्थेषु प्रतीत्यभावावात् अप्रतीतता दोषः ।

वा: ग्राम्यता—

"ताम्बूल भृत गल्लोयं भल्लं जल्पति मानुषः
करोति खादनं पानं सदैवतु यथा तथा"

अत्र श्लोके, ये गल्लभल्लादयः शब्दाः व्यवह्रियन्ते ते एव ग्राम्य जनोचिताः । अतः ग्राम्यता दोषः ।

वा: नेयार्थता—

"वस्त्रवैदूर्य्यं चरणैः क्षतसत्त्वरजः परा
निष्कम्पारचिता नेत्र युद्धं वेदयं सांप्रतम्"

अत्र वस्त्रपदेन अम्बर पदं आक्षिप्यते । तत्रवैदूर्य्यभूतः यः सूर्य
तस्य चरणैः, पादैः (करणैः) क्षतं, सत्त्वरजोगुणाभ्यां परं (त
यस्याः सा । अर्थात् विनष्टान्धकारा । अतः नेत्र युद्ध (युगलं) वेः
उद्घाटय । अत्र रूढि प्रयोजनाभ्यां विना लक्षणा प्रकरणात् नेयार्थ
दोषः ।

वा: क्लिष्टता—

"धम्मिलस्यनकस्य प्रेक्ष्यनिकामं कुरङ्गशावाक्ष्याः
रजत्यपूर्व बन्धव्युत्पत्तेर्मानसशोभाम्"

धम्मिलस्य (केशपाशस्य) शोभां विलोक्य कस्य मनसि अनुरा
नोदेति ? इति अर्थः क्लिष्टः । अस्मात् क्लिष्टता दोषः अत्र ।

वा: अविमृष्टविधेयांशता—

"न्यक्कारोह्ययमेवमे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्तिराक्षसकुलं जीवत्यहोरावणः
धिग्धिग् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिका विलुण्ठन वृथोच्छूनै किमेभिर्भुजैः"

अत्र "अयमेयन्यक्कारः" इति कथनीयम् । परन्तु वैपरीत्येन एत
कथनात् (अनुवाद्यमन्तरा विधेयस्य प्रागेव भट्टङ्कनात्) विधेया
विमर्षता दोषः । एवमपि उच्छून स्थले समास योगात् तस्य गुणी
भूतावस्था भवति । अतः विधेयाविमर्शता दोषः ।

**प्रश्नः ३३- पदांशदोषान् सोदाहरणं प्रदर्शयत ?**

उत्तरम्—१- पदांशगत श्रुतिकटुता—

> अलपति चपलत्वात् स्वप्नमायोपमत्वात्
> परिणति विरसत्वात् संगमेनाङ्गनायाः
> इति यदि शतकृत्वस्तत्त्वमालोचयाम—
> स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा

उदाहृते पद्ये "चपलत्वात्" "उपमत्वात्" "विरसत्वात्" इत्यादि पदेषु त्वात्योगात् कर्णकटु जायते। अतः कर्णकटुता (श्रुतिकटु) दोषः।

अथवा—

> "तद्गच्छसिद्ध्यै कुरुदेव ! कार्य्यमर्थोयमर्थान्तरलभ्य एव
> अपेक्षते प्रत्ययमङ्ग लब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः"

अत्र "द्ध्यै" "ब्ध्यै" इति अंशे श्रुतिकटुजननात् श्रुतिकटुता दोषः।

२- पदैक देशे निहतार्थता—

> "याप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति।
> वलाहकच्छेद विभक्तरागामकाल सन्ध्यामिव धातुमत्ताम्"

अत्र श्लोके यः मत्ताशब्दः दत्तः सः क्षीवार्थे (उन्मतार्थे) प्रसिद्धः। परन्तु धातुमत्ताशब्दस्य व्युत्पत्तिः— धातवः (सुवर्णरौप्यताम्राणि हरितालं मनःशिला, गौरकाञ्जन कासीस लोहवङ्गाः सहिङ्गुलाः, गन्धकोभ्र

कमित्याद्या धातवोगिरिसम्भवा) सन्ति अस्य इति धातुमान्। तस्य भावः तामिति अनुसारं भवति ! परन्तु पठनमात्रेण मत्ताशब्दः क्षावार्थं प्रति अङ्कुरं दर्शयति अतः निहतार्थता दोषः।

३- पदैकदेशे निरर्थकता—

"आदावञ्जन पुंजलिप्त वपुषां श्वासानिलोल्लासित—
प्रोत्सर्पत् विरहानलेन च ततः संतापितानां दृशाम्।
संप्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवः
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा"

अत्र एकाकिन्या एव नायिकायाः विरहमाकल्यरुदत्याः वर्णनप्रसङ्गे "दृशा" मिति बहुवचनस्य अनावश्यकत्वात् (निरर्थकत्वात्) निरर्थकता दोषः। अपिच "कुरुते" इति आत्मनेपदप्रयोगोऽपि न संगच्छते। प्रधान क्रियाफलस्य कर्त्तरि सम्बन्धाभावात्। अतः दोषः।

४- पदैकदेशावाचकत्वम्—

"चापाचार्य्यस्त्रिभुवनजयी कार्तिकेयो विजेयः
शस्त्रव्यस्थः सदनमुदधि र्भूरियं हन्तकारः।
अस्त्येवैतत् किमुक्तवता रेणुका कण्ठबाधा
वधस्पर्धस्तव परशुना लज्जते चन्द्रहासः।

पद्येऽस्मिन "विजेयः" इति यत्पदं वर्तते तत् "विजितः" इति क्त प्रत्ययार्थे अवाचकत्वं दधाति। जि धातोः "अचो यत्" सूत्रेण यत् प्रत्ययेन विजेय शब्दः भावि विषयकः। परन्तु अत्र अतीतकालार्थे

सः विवक्षितः । परन्तु अतीतकालबोधनाय तस्य तादृशी शक्तिर्नास्ति । अतः अवाचकता दोषः ।

५- पदैकदेशे व्रीडाश्लीलता—

"अतिपेलवमति परिमित वर्णं लघुतरमुदाहरति शठः
परमार्थतः सः हृदयं वहति पुनः कालकूटघटितमिव"

अत्र श्लोके पेलवशब्दस्य आद्याक्षरयुगलं उत्कलभाषायां तथा लाट भाषायां वृषणरूपगूह्याङ्गबोधकतया व्रीडादायीति व्रीडाश्लीलत्वं दोषः ।

जुगुप्साऽश्लीलता—

"यः पूयते सुरसरित् मुखतीर्थ सार्थ
स्नानेन शास्त्रपरिशीलन कीलनेन
सौजन्यमान्यजनि रूर्जित मूर्जितानां
सोऽयं दृशोः पतति कस्यचिदेव पुंसः"

अत्र श्लोके "पूयते" इत्यस्य आद्याक्षर द्वये विकृतं रुधिररूपार्थक बोधकतया (पूज) जुगुप्सारूपाश्लीलता दोषः ।

अमङ्गलाश्लीलता—

"विनय प्रणयैक केतनं सततं योऽभवदङ्गतादृशः
कथमद्य स तद्वदीक्षतां तदभिप्रेत पदं समागतः"

अत्र अभिप्रेतमिति स्थले प्रेतपदं मृतलोकस्य गतमात्मानं बोधयति । अतः अमङ्गलरूपाश्लीलतादोषः ।

एवमपि शाकुन्तले "वयस्य ! अन्यच्छ शकुन्तलायाः प्रमाद- मभिप्रेतं लिखितुं विस्मृतमस्माभिरिति" अंशेऽपि अमङ्गलाश्लील- दोषः ।

६- पदैक देशे संदिग्धता दोषः—

"कस्मिन् कर्मणि सामर्थ्यमस्य नोत्तपतेतराम्

अयं साधुचरस्तस्मादञ्जलि वध्यतामिह"

अत्र "साधुचरः इत्यंशे साधुषु चरतीति व्युत्पत्त्या साधूपपद- चरधातोः "चरेष्ट" इति ट प्रत्ययेन साधुचर इति पदं साधु वा आहो भूतपूर्वः इति व्युत्पत्त्या "भूतपूर्वे चरट्" इति सूत्रेण चरट् प्रत्यये साधुचरपदं साधु इति संदेहः । अतः संदिग्धता दोषः ।

७- पदैकदेशे नेयार्थता:..

"विमुच्यतेऽस्य भूपाल मौलिमालामहामणेः

सुदुर्लभं वचोवाणैस्तेजो यस्य विभाव्यते"

उदाहृते पद्ये वचोवाण पदं वर्तते । तत्र वचः शब्दस्य गिरर्थकता वचः स्थाने "गीः" इति निवेश्य गीर्वाणार्थकरणात् नेयार्थता दोषः एतादृग् लक्षणा करणाय रूढिर्वाप्रयोजनं नास्ति ।

**प्रश्नः ३४- वाक्यगतदोषाः उदाहरणेषु प्रदर्शनीयाः ?**

**उत्तरम्—**

"प्रतिकूल वर्णमुपहत लुप्तविसर्गं विसन्धिहतवृत्तम्

न्यूनाधिकं कथितपदं पतत् प्रकर्षं समाप्त पुनरात्तम्

अर्धान्तरैक वाचकं अभवन्मत् योगमनभिहितवाच्यम्

अपदस्थ पदसमासं संकीर्णं गर्भितं प्रसिद्धिहतम्

भग्नप्रक्रममक्रममत्परार्थं च वाक्यमेव तथा ।"

१- प्रतिकूलवर्णता— यं रसं प्रति येषां वर्णानामनुकूलता नास्ति तत्र यदि तद् वर्णानां योजनं क्रियेत तर्हि प्रतिकूल वर्णता दोषः भविष्यति । यथा —

"अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम्
कम्बुकण्ठ्याः क्षणं कण्ठे कुरुकण्ठार्तिमुद्धर"

अत्र श्लोके शृङ्गाररसवर्णना प्रसङ्गे कोमलं वर्णान् विहाय अनुगुणेतर ट वर्ग वर्णं विन्यासात् प्रतिकूल वर्णता दोषः ।

२- उपहतत्वम् ( ओ, त्व प्राप्तत्वम्) "धीरोविनीतोनिपुणो वराकारोनृपोऽत्र सः" अत्र "हशिच" इति सूत्रानुसारं विसर्गपरिवर्तिनः हश् प्रत्याहारान्तर्गतस्य वर्णस्य योगात् पूर्वविसर्ग युक्तस्य वर्णस्य ओ कारः भवति । एवम्भूतानां वाहुल्ये अस्य दोषस्यावकाशः ।

३- लुप्तविसर्गता—

"यस्य भृत्यावलोत्तिसक्ता भक्ताबुद्धि प्रसादता"

अत्र "भृत्या" "वलात्तिसक्ता" "भक्ता" इति स्थलेषु बिसर्गस्य लोपः भवति । विसर्गलोपस्य वाहुल्यात् अत्र लुप्त विसर्गतादोषः भवति ।

४- विसन्धिता— अयं दोषः त्रिधा । १- संधेः वैरूप्यम् । २- संधेः अश्लीलत्वम्, ३- संधेः कष्टत्वम् । एतत् सर्वं क्रमशः उदाह्रियते ।

१- संधेः वैरूप्यम्—

"राजन् विभान्ति भवतश्चरितानि तानि-
इन्दोद्युतिं दधति यानि रसातलेऽन्तः ।
धीदोर्बले अतितते उचितानु वृत्ता-
आतन्वती विजयसंपदमेत्य भातः ।"

अत्र श्लोके "तानि इन्दोः" इति स्थले "अन्यत्र विभाषया" योगेन ऐच्छिक संध्यभावः दोषः । एवमपि "धीदोर्बले अतित "अतितते उचितानुवृत्ती" "उचितानुवृत्ती आतन्वती" इति स्थ "ईदूदेद्द्विवचनं प्रगृह्यम्" इति पाणिन्यनुसारं प्रगृह्यसंज्ञाया "प्लुतप्रगृह्या अचिनित्यम्" इति अनुसारं संधि निषेधे प्राप्ते असकृत् प्रयोगात् दोषः ।

२- संधेरश्लीलता—

"वेगादुड्डीय गगने चलण्डामर चेष्टितम्
अयमुत्तपते पत्री ततोऽत्रैव रुचिङ्कुरु ।

अत्र चलण्डामरेति स्थाने लण्डा पदं तथा रुचिङ्कुरु इत्यत्र चिङ्कु क्रमेण पुरुषलिङ्गार्थकतया योन्यङ्कुरबोधकतया च अश्लीलता दोषाव

३· संधेः कष्टता—

"उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः
नात्रर्जु युज्यते गन्तुं शिरोनमय तन्मनाक्"

अत्र "उर्व्यसावत्र" इतिस्थाने उर्वी+असौ+अत्र इति संधि विश्ले कष्टत्वम् । एवमपि "तरु+आली" "मरु+अन्ते" "चारु+अवस्थि इति स्थलेषु संधेः कष्टता दोषः ।

५- हतवृत्तता— अयं दोषोऽपि त्रिधा । १- लक्षणानुसार अश्रव्यता, २- अप्राप्तगुरुभावान्तलघुता, ३- रसाननुगुणता यथा

१- लक्षणानुसारमपि अश्रव्यता—

"अमृतममृतं कः संदेहो मधुन्यपिनान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम्
सकृदपि पुनर्मध्यस्थः सन् रसान्तर विज्जनः
वदतु यदिहान्यत् स्वादु स्यात् प्रियादशनच्छदात्"

श्लोकोऽयं "हरिणी" वृत्तेन निबद्धः। अनेन वृत्तानुसारेण प्रति षष्ठाक्षरे यतिपातः कर्तव्यः। चतुर्थ पादस्य षष्ठाक्षरे "हा" इति परपदअनुसंधानस्य अपेक्षणीयत्वेन यतिभङ्गात् अश्रव्यत्वम्।

२- अप्राप्त गुरुभावान्तलघुता— छन्दः शास्त्रानुसारं "पादान्तस्थः विकल्पेन" इति नयेन पादान्तस्थस्य लघुवर्णस्य विकल्पेन गुरुत्वं स्यात्। परन्तु सत्यपि नियमेऽस्मिन् यत्र गुरुकार्य्याक्षमत्वं तत्र दोषस्यास्यावकाशः। यथा—

"विकसित सहकार हारहारि परिमल गुंजित पुंजित द्विरेफः
नवकिसलय चारु चामर श्रीर्हरति मुनेरपि मानसं वसन्तः"

श्लोकेऽस्मिन् पुष्पिताग्रावृत्तं वर्तते। पादान्तस्थस्य लघोरपि विकल्पेन गुरुत्वं वसन्ततिलकेन्द्रवज्रादिषु सम्भवेत्। अत्र श्लोके प्रथमपाद-स्यान्तिमेऽक्षरे "रि" स्थाने दीर्घमुचितम्। परन्तु नियमेनानेन तत् न भवति। प्रत्युत बन्ध शैथिल्यं जायते। अतः अप्राप्त गुरुभावान्त लघुता दोषः।

५- रसाननुगुणता—यद्वृत्तं यस्य रसस्यानुगुणत्वमाप्नोति रसानुगुणत्वं तत् भजते। परन्तु यत्र यत्वृत्तं रसस्य अनुगुणत्वं भजते तत्र रसाननुगुणता दोषः भवति। यथा—

"हा नृप ! हा बुध ! हा कविबन्धो विप्रसहस्रसमाश्रय देव।
मुग्ध विदग्ध सभान्तर रत्न ! क्वासि गतः क्व वयं च तदेव॥"

श्लोकोयं दोधक वृत्तेन लिखितः। "दोधकमिच्छन्ति भत्रितयाद् गौ" इति लक्षणात्। इदं वृत्तं हास्यरसानुकूलम्। परन्तु करुण अस्य स्थापनात् रसाननुगुणत्वं भवति। अतः रसाननुगुणता दोषः।

६- न्यूनपदता दोषः।—

"तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिर मुषितं वल्कलधरैः।
विराटस्यावासे स्थित मनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ?

अत्र श्लोके "अस्माभि"रिति पदमावश्यकम्। अपिच "खिन्ने" इत्यस्य पूर्वं "इत्थ"मिति पदमावश्यकम्। परन्तु एतदभावो परिदृश्यते। येन न्यून पदता दोषः भवति।

७- अधिकपदता—

"स्फटिकाकृतिनिर्मलः प्रकामं प्रति संक्रान्तनिशातशास्त्रतत्त्वः
अविरुद्ध समन्वितोक्ति युक्तिः प्रतिमल्लास्तमयोदयः स कोऽपि"

अनावश्यकस्य पदस्य व्यवहारात् अर्थात् विवक्षारहितस्य अर्थस्य हेतोः यत्र पदप्रयोगः तत्र अयं दोषः भवति।

अत्र स्फटिकपदं शुभ्रार्थसंपादकम् । परन्तु स्फटिकवत् अर्थात् स्फटिकस्याकृतिवत् निर्मलः (शुभ्रान्तः करणः) इति अन्वय करणात् आकृतिपदमनावश्यकम् । अतः आकृतिपदस्यावश्यक-रहितस्य स्थापनात् अधिक पदता दोषः ।

८- कथितपदता—

"अधिकरतलतल्पं कल्पितं स्वापलीला
परिमिलन निमीलत् पाण्डिमा गण्डपाली
सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीला यौवराज्याभिषेकम्"

श्लोकेऽत्र लीलापदं प्रथम पादे तथा चतुर्थ पादे द्विवारं व्यवहृतं सत् वर्तते । लीला पदस्य प्रथम पादे कथनादनन्तरं चतुर्थे पादे पुनः कथनात् कथितपदता दोषः ।

९- पतत् प्रकर्षता—

"कः कः कुत्र न घुर्घुरायितघुरी घोरोघुरेत् सूकरः
कः कः कं कमलाकरं विकमलं कर्तुं करीनोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते"

उदाहृते पद्ये सूकरेभ्यः करिणां करिभ्यः यमवाहनजातीयतया महिषाणां, महिषेभ्यः सिंहानामुत्कृष्टतया तेनैव क्रमेण बन्धदार्ढ्य-मुचितम् । परन्तु सूकराभिधाने बन्ध दार्ढ्यात् सिंहाभिधाने बन्धस्य

अदाढर्यात् पतत् प्रकर्षता दोषः। अर्थात् सिंहाभिधाने बन्ध दाढर्यस्य (प्रकर्षस्य) पतनात् पतत् प्रकर्षता दोषः ।

१०- समाप्तपुनरात्तता— यत्र वाक्यसमाप्तौ अपि विशेषण दानेन पुनः वाक्यस्य दीर्घीकरणं भवति तत्र समाप्त पुनरात्तता दोषः। यथा—

"क्रेंकारः स्मरकार्मुकस्य सुरत क्रीडापिकीनां रवः
झङ्कारः रतिमंजरी मधुलिहां लीला चकोरी ध्वनिः
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत् कङ्कण-
क्वाणः प्रेम तनोतुवो न ववयोलास्याय वेणु स्वनः"

अत्र श्लोके ऊदर्ध्वपादत्रितये क्वाणस्य विशेषणानि दत्तानि। "एवम्भूतः क्वाणः वः प्रेम तनोतु" इति वाक्य समाप्तौ "नववयोलास्याय वेणुस्वनः" इति विशेषणस्य पुनरुपादानात् समाप्त पुनरात्तता दोषः। एवं दशकुमारे "ब्रह्माण्डच्छत्रदण्ड..." श्लोके तर्क्यम्

११- अर्थान्तरैकवाचकत्वम्—

"मसृणचरणपातं गम्यतां भूः सदर्भा
विरचयसिचयान्तं मूर्ध्नि घर्मः कठोरः
तदिति जनक पुत्री लोचनैरश्रु पूर्णैः
पथि पथिक वधूभिर्विक्षिता शिक्षिता च"

अत्र श्लोके यतः भूः सदर्भा ततः मसृणचरणपातं गम्यतामिति स्थले तत् (ततः) पदं श्लोकस्य अपरार्धे वर्तते। अतः अर्थान्तरैकवाचकत्वं दोषः।

१२- अभवन्मतयोगत्वम्— मतस्य (इष्टस्य) योगः मतयोगः । न भवतीति अभवन् । अभवन् चासौ मतयोगः इति अभवन्मतयोगः तस्य भावः अभवन्मतयोगत्वम् । अर्थात् पदार्थयोः अन्वयस्य एवासम्भः । अविमृष्टविधेयांशे अन्वयसम्भवेऽपि उद्देश्य विधेयभावः विपरीततया वर्तते । इति भेदः ।

अयं दोषः कुत्रचित् विभक्ति भेदनिबन्धनत्वेन, कुत्रचित् न्यूनतादिनिबन्धनत्वेन, कुत्रचिदाकाङ्क्षादिविरहनिबन्धनत्वेन, कुत्रचित् वाच्य व्यङ्ग्ययोर्विवक्षित योगाभावनिबन्धनत्वेन, कुत्रचित् समासाच्छन्नतया मतयोगाभावनिबन्धनत्वेन, कुत्रचित् व्युत्पत्ति विरोध निबन्धनत्वेन च षड्धा विभज्यते । एषु केवलमाद्यविभागः प्रदर्श्यते ।

१- विभक्ति भेदनिबन्धनम्—

> येषां तास्त्रिदशेभदान सरितः पीताः प्रतापोष्मभिः
> लीला पानभुवश्च नन्दनवनच्छायासु यैः कल्पिताः
> येषां हुंकृतयः कृतामरपति क्षोभाः क्षपाचारिणां
> किं तैस्त्वत्परितोषकारि विहितं किञ्चित् प्रवादोचितम्

अत्र श्लोके "नन्दनतरुच्छायासु यैः कल्पिताः" इति यैः पदं क्षपाचारिभिः साकं विवक्षितं भवेत् । परन्तु एतत् न सम्भवति । यतः, यैरिति तृतीया विभक्तिः, क्षपाचारिणामिति षष्ठी विभक्तिः । अनयोः मध्ये विभक्ति विपरिणामयोगात् प्रकृतार्थः सहसा नाववुध्यते । अस्मात् अत्र विभक्तिभेद निवन्धनमिति अभवन्मतयोगत्वस्य प्रथमविभागदोषः ।

१३- अनभिहितवाच्यतादोषः— अनभिहितं, अनुक्तं, वाच्यं, वाचकपदं यत्र तत्र अस्य दोषस्यावकाशः। वाच्यमत्र शब्दपरं नोचेत् अस्य अर्थं दोषापत्तिः भवेत् यथा—

"अप्राकृतस्य चरितातिशयैश्च दृष्टैरत्यद्भुतैरपहृतस्य तथापि नास्था
कोऽप्येष वीरशिशुकाकृतिरप्रमेय सौन्दर्यसारसमुदाय मयःपदार्थः"

अत्र श्लोके "तथापि" इति यत्पदं दत्तं, तत् पूर्ववाक्यस्थं कमपि अर्थमपेक्षते। चन्द्रिकानुसारं "यद्यपि अपहृतः अस्मि" तथापि नास्था इति यद्यपि पदाभावात् आकाङ्क्षापेक्षणीयत्वेन दोषः।

१४- अस्थान पदता—

"प्रियेण संग्रन्थ्य विपक्ष संनिधावुपाहितां वक्षसि पीवरस्तने
स्रजं न काचित् विजहौ जलाविलां वसन्ति हि
प्रेम्णिगुणानवस्तुषु।"

अत्र श्लोके "न काचित् विजहौ"? इति कथनात् सर्वा अपि विजहुरिति अर्थस्य प्रकाशनात् विपरीतार्थः बुध्यते। एतदर्थं न कारस्य अस्थानस्थितिर्हेतुः। यदि विजहुरिति अस्मात् पूर्वमेव न कारस्य स्थितिः स्यात् तर्हि अर्थस्य समीचीनता स्यात्। न कारस्य अस्थानस्थापनेन अस्य दोषस्यागमनं भवति।

१५- अस्थान समासता—

"अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छतिमान एषधिगिति क्रोधादिवालोहितः
प्रोद्यत् दूरतर प्रसारित करः कर्षत्यसौ तत्क्षणात्
फुलत् कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी"

अत्र श्लोके पूर्वार्धे क्रुद्धस्य शशिनः उक्तौ दीर्घ समासः विधेयः। परन्तु तत्र दीर्घसमासाभावः भवति। उत्तरार्धे कवेरुक्तौ दीर्घ समासा-भावेऽपि तत्कृतः। अतः अस्थान समासता दोषः।

१६- संकीर्णता—

"किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणैनम्
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम्"

अत्र पादगतं बहुगुणं हृदयनाथं किं न पश्यसि, मनसः तमोरूपं कोपं मुञ्च। इति वक्तव्ये "ननु मुञ्च हृदयनाथम्" इति कथनात् वाक्या-न्तर पदानां वाक्यान्तरे व्यवहारः भवति। अस्मात् संकीर्णता दोषः।

१७- गर्भितता- यत्र एकं वाक्यं वाक्यान्तरे मिश्रितरूपेण वर्तते तत्र गर्भितता दोषोभवति। यथा—

"परापकार निरतैर्दुर्जनैः सहसंगतिः
वदामि भवतस्तत्त्वं न विधेया कदाचन"

अत्र भवतस्तत्त्वं वदामीति पादः वाक्यान्तरे प्रविष्टः। अर्थात् भिन्नः तृतीय पादः मध्ये वर्तते। अतः गर्भितता दोषः। सोमेश्वर कृतसंकेतानुसारं यदि—

"वदामि भवतस्तत्त्वं न विधेया कदाचन।
परापकार निरतैर्दुर्जनैः सहसंगतिः।"

इतिस्यात् तर्हि दोषः न भवेत्।

१८- प्रसिद्धिहतत्वम्—

"महाप्रलयमारुत क्षुभित पुष्करावर्तक-
प्रचण्ड घनगर्जितप्रतिरुतानुकारी मुहुः ।
रवः श्रवण भैरवः स्थगित रोदसी कन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः"

अत्र "रवः" इति यत् पदं दत्तं तत् न समीचीनम् । यतः मेघानां गर्जन वर्णन प्रसङ्गे "रवः" पदमप्रसिद्धम् । मण्डूकानां गर्जन वर्णन प्रसङ्गे तत् समीचीनम् । अतः अत्र प्रसिद्धिहतता दोषः ।

१९- भग्न प्रक्रमता—

"नाथोनिशायानियतेर्नियोगादस्तं गतेहन्त ! निशापि याता।
कुलाङ्गनानांहि दशानुरूपं—
नातः परं भद्रतरं च कास्ति ।"

अत्र श्लोके "अस्तं गते" इति गम् धातोः प्रयोगः भवति । तदनन्तरं निशापि याता इति कथनात् "या" धातोः प्रयोगः भवति । आदौ एकस्य धातो. अनन्तरं धात्वन्तरस्य प्रयोगात् क्रमभग्नं जातम् । अतः भग्न प्रक्रमता दोषः ।

२०- अक्रमता—

"द्वयं गत संप्रति शोचनीयतां समागम प्रार्थनया कपालिनः
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च
नेत्र कौमुदी ।"

अत्र पद्ये चतुर्थपादारम्भानन्तरमेव चकारस्थितिरुचिता । परन्तु "लोकस्य" इत्यनन्तरमेव चकार स्थापनात् अक्रमण दोषः ।

२१- अमत परार्थता— अमतः, (प्राकरणिकरसविरुद्धरस-व्यञ्जकः) परार्थः द्वितीयार्थः यत्र तत्र अयं दोषः भवति । यथा —

"राममन्मथ शरेण ताडिता दुःसहेन हृदये निशाचरी
गन्धवद्रुचिर चन्दनोचित । जीवितेश वसतिं जगाम सा"

उदाहृते पद्ये वीभत्स शृङ्गाररसौ वर्तते । अनयोर्मध्ये नित्यं विरोधभावः वर्तते । प्राकरणिकार्थः तटकावधरूपः । अप्राकरणि-कार्थः अभिसार रूपोऽर्थः । परन्तु अयं द्वितीयार्थः वीभत्सरसविरोधी । अतः विरोधिनः शृङ्गार रसस्य व्यञ्जकत्वात् अमतपरार्थता दोषः ।

**प्रश्नः ३५- अर्थ दोष नामान्युल्लिख्य उदाहरणैः संगमयत ?**

उत्तरम्—

"अर्थोऽपुष्टः कष्टः व्याहत पुनरुक्तदुष्क्रमग्राम्याः ।
संदिग्धोनिर्हेतुः प्रसिद्धिविद्याविरुद्धश्च
अनवीकृतः सनियमानियम विशेषाविशेषपरिवृत्ताः
साकाङ्क्षोऽपदयुक्तः सहचरभिन्नः प्रकाशित विरुद्धः
विध्यनुवादायुक्तस्त्यक्त पुनः स्वीकृतोऽश्लीलः ।"

१- अपुष्टार्थता—

"अतिवितत गगन सरणि प्रसरणपरिमुक्तविश्रामानन्दः
मरुदुल्लासित सौरभ कमलाकरहासकृद्रविर्जयति"

अत्र श्लोके अतिविततत्व, सरणित्व, मरुदुल्लासित सौरभत्व प्रभृतीनि पदानि वर्ण्यमानस्य रवेः न पुष्टिं कुर्वते । अतः अपुष्टता दोषः । गगनस्य स्वतः दीर्घतातया अति विततत्वं नोपकुरुते । गगने सरणित्व-मपि नारोपणीयम् । एतदुपादानेऽपि नार्थे काचित् पुष्टिः ।

२- कष्टता—

"सदा मध्ये यासामियममृतनिस्यन्द सुरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम्
प्रसादं ता एता घनपरिचिताः केन महतां
महाकाव्य व्योम्नि स्फुरित मधुरा यान्तु रुचयः"

अस्य श्लोकस्य अर्थः पक्षे एव भवति । यथा— यत्र कवि भारतीमध्ये अमृत वर्षिणो शृङ्गार परिपूर्णा तथा गुणरीतियुक्ता रचना वर्तते सा रचना कथं झटिति बोध्याभवेत् ।

अपर पक्षे—(अप्रारणिकार्थः) यस्मिन् सूर्य्यप्रभामध्ये मिष्टजला सुरनारी अवगाहनाङ्ग सुवास युता त्रिपथगा प्रवहति यदि मेघेन सः सूर्य्यः आच्छन्नः स्यात् तर्हि महाकवीनां काव्यवत् अस्पष्टतामेति सा सुरसतिन् । शरत् कालिन सरित्वत् सा स्वच्छा न भवति ।

विवक्षितार्थस्य कष्टेनावबोधनात् अत्र कष्टता दोषः ।

३- व्याहतता— प्रागेव एकस्य उत्कर्षमपकर्षं वा अभिधाय यदि अनन्तरं तत् वैपरीत्यं संपाद्यते तर्हि व्याहततादोषो भवति । यथा—

'जगति जयिन स्ते ते भावा नवेन्दु कलादय:
प्रकृति मधुरा: सन्त्यैवान्ये मनो मदयन्ति मे
मम तु यदियं याता लोके त्रिलोचन चन्द्रिका—
नयन विषयं जन्मन्यैक स एव महोत्सव:"

अत्र श्लोके असारतया आदौ चन्द्रिका वर्णिता । परन्तु तृतीय पादे "त्रिलोचनचन्द्रिका याता" इति कथनेन चन्द्रिकाया: उत्कर्ष: प्रतिपादित:। अत: चन्द्रिकाया: आदौ असार वर्णनानन्तरं सार वर्णनात् व्याहतता दोष:।

४- पुनरुक्तता—

"कृतमनुमत दृष्ट वा यैरिदं गुरुपातकं
नुज पशुभिर्निमर्य्यादैर्भवद्भिरुदायुधै:
नरकरिपुणा सार्धं तेषां स भीमकिरीटिना—
मयमहमसृङ्मेदोमांसै: करोमि दिशां बलिम्"।

अस्मात् श्लोकात् प्रागेव अर्जुन ! अर्जुन ! इति सम्बोधनं विधाय स भीमकिरीटिनामिति पुन: कथनेन किरीटिपदं (अर्जुनपदम्) पुनरुक्तम् क्रुद्धस्याश्वथाम्न: वेणीसंहारे जनकवधानन्तरमेव उक्तिरियम्।

५- दुष्क्रमता—

"भूपाल रत्न निर्दैन्यप्रदान प्रथितोत्सव !
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम्"

संसारे दृश्यते य: वहुमूल्यात्मकस्य वस्तुन: प्रदाने असमर्थ: स: तदपेक्षया लघुमूल्यात्मकस्य वस्तुन: प्रदानार्थं याच्यते । परन्तु यत्र

तयोःक्रमः भिन्नतया भवति, अर्थात् आदौ लघुमूल्यात्मकस्य प्रदाने यदि असमर्थः तर्हि वहुमूल्यात्मकं वस्तु देयम् इति चेत् स्यात् तत्र दुष्क्रमता दोषः।

अत्र लघुमूल्यात्मकस्याश्वस्य प्रदाने यदि असमर्थः तर्हि मदालसं मातङ्गं देहि इति कथनात् क्रमस्य अनौचित्यं जातम्। इतिकृत्वा दुष्क्रमता दोषः (अश्वापेक्षयागजस्य मूल्याधिक्यात्)

६- ग्राम्यता—

"स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैति ते
तदयि ! सांप्रतमाहर कूर्परं त्वरितमूरुमुदञ्चय कुञ्चितम्"

असौ जनः तव समीपे स्वपिति, अहं तावत् तव समीपे स्वपिमि। अनेन तव का क्षतिः? सत्वरं कुञ्चितमूरुं उन्मोचय। इति पामर जन उक्तिः। नागरिकाणां कृते एतादृशी युक्तिर्नैव खटते। ग्राम्य जनानामेतादृशः व्यवहारः। अतः अत्र ग्राम्यतादोषः।

७- संदिग्धता—

"मात्सर्य्यमुत्सार्य्य विचार्य्य कार्य्यमार्य्याः ! समर्यादमुदाहरन्तु
सेव्या नितम्बाः किमु भूधराणामुतस्मरस्मेर विलासिनीनाम्"

अत्र श्लोके गिरिनितम्बः (मध्यभागः) सेव्यः, आहोस्वित् नायिका नितम्बः इति प्रश्नकर्तुराशयज्ञानाभावात् संदेहो जायते। अतः संदिग्धता दोषः। (प्रश्नकर्ताविरागी रागी वा इति सदेहः)

८- निर्हेतुता —

"गृहीतं येनासीः परिभव भयान्नोचितमपि
प्रभावात यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुत शोकान्नतुभयात्
विमोक्ष्ये शास्त्र त्वामहमपि यत स्वस्ति भवते"

श्लोकेऽस्मिन् सुतशोकात् द्रोणेन शस्त्रं त्यक्तमिति शस्त्रमोचनाय सुतशोकः हेतुत्वेन प्रदत्तः । परन्तु अस्त्रमोचने अश्वत्थाम्मः न कोपि हेतुः दत्तः । अस्मात् द्वितीय शस्त्र मोचनं प्रति हेतोरभावात् निर्हेतुता दोषः ।

९- प्रसिद्धि विरुद्धता — (लोकविरुद्धे)

'इदं ते केनोक्तं कथय कमलातङ्कवदने
यदेतस्मिन् हेम्मः कटकमिति वत्से खलुबियम्
इदं तद्दुःसाधा क्रमण परमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमल मूले विनिहितम्"

यथा श्रीकृष्णः चक्रधारीति लोके प्रसिद्धिरस्ति, न तथा कामस्य । अत्र श्लोके कामस्य करकमलमूले चक्रं विनिहितमिति कथनात् लोकविरुद्धयोगात् प्रसिद्धि विरुद्धता दोषः ।

९- (ii) कविप्रसिद्धि विरुद्धता —

"उपपरिसरं गोदावर्य्याः परित्यजताध्वगाः ।
सरणिमपरोमार्गस्तावत् भवद्भिरिहेक्षताम् ।

इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोवञ्चन्नवाङ्कुर कण्टकः"

कवि प्रसिध्यनुसारं पादाघातादशोकः विकसति ... योषितामास्य मदैः" इति समीचीनं वर्तते। परन्तु श्लोकेऽत्र वनितायाः पादाघातेन अङ्कुरोद्गमः अशोकस्य भवतीति वर्णितम्। वस्तुतः कविसमयानुसारं अशोकस्य वनितापादाघातेन पुष्पोद्गमः भवेत्। परन्तु पुष्पोद्गमं विहाय अङ्कुरोद्गम वर्णनात् कविप्रसिद्धिविरुद्धता दोषः।

१०-A विद्याविरुद्धता (धर्मशास्त्रविरुद्धता)—

"सदास्नात्वा निशीथिन्यां सकलं वासरं बुधः
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च"

ग्रहोपरागं विना रात्रौ स्नानं धर्मशास्त्रविरुद्धम्। परन्तु सदा निशीथिन्यां स्नान करण-कथनात् अत्र धर्मशास्त्रानुसारं दोषः। अयं दोषः विद्याविरुद्धतान्तर्गतः।

१० B. अर्थशास्त्रविरुद्धता—

"अनन्य सदृश यस्य बलंबाह्वोः समीक्ष्यते
षाड्गुण्यानुस्मृतिस्तस्य सत्यं सा निष्प्रयोजना।"

यः यादृशः बली भवतुनाम, सः नूनं षाड्गुण्यमनुसरेत्।

अयं अर्थशास्त्रनियमः। परन्तु अत्र श्लोके॥ भुजयोर्बलस्य विद्यमानतायां षाड्गुण्यानुस्मृतिः प्रयोजन हीना" इति कथनात् अर्थशास्त्रस्य विरोधः जातः। अतः अर्थशास्त्रविरुद्धता दोषः।

१० C- कामशास्त्रविरुद्धता—

"विधाय दूरेकेयूर मनङ्गाङ्गणमङ्गना
बभार कान्तेन कृतां करजोल्लेखमालिकाम्"

अस्मिन् श्लोके केयूर स्थाने नखक्षतचिह्नं नायिका दधार इति कथनात् कामशास्त्रविरोधः जातः। कामशास्त्रानुसारं सुरत समये वक्षमाणेषु स्थानेषु नखक्षतं करणीयम्। यथा—

"स्तने नखक्षतं प्रोक्तं जघनेऽपि क्वचित् भवेत्"

अपिच—

"नख क्षतस्य स्थानानि कक्षौ वक्षस्तथा गलः,
पार्श्वौ जघनमूरुच स्तनगण्ड ललाटिका"

परन्तु अत्र श्लोके केयूर स्थाने (भुजे) नखक्षत वर्णनात् कामशास्त्र विरुद्धता दोषः।

१० D- योगशास्त्र विरुद्धता—

"कष्टाङ्ग योग परिशीलन कीलनेन दुःसाधसिद्धिसविधं विदधत्त्रिदूरे आसादयन्नभिमता मधुना विवेक ख्याति समाधि घनमौलिमणिर्विमुक्तः"

योगशास्त्रानुसारं आदौ विवेक ख्यातिः (प्रकृति पुरुषयोर्भिन्नत्वज्ञानम्) तदनन्तर संप्रज्ञातयोगः (सविकल्पक समाधिः) तदनन्तरं असंप्रज्ञात-योगः (निर्विकल्पक समाधिः) ततः परं मुक्तिः इति क्रमः। परन्तु अत्र क्रममपहाय विवेकं ख्यातिमात्रतः मुक्तिरिति कथनात् योगशास्त्र-विरुद्धता दोषः।

११- अनवीकृतता—

"प्राप्ताः श्रियः सकलकामदुधास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
संतर्पिताः प्रणयिनो विभवैस्ततः किं,
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम्"

उदाहृते पद्ये सर्वत्र "ततः किमिति" व्यवहारात् अनवीकृतता दोषः । "ततः किमिति" पदं सकृत् संयोज्य नवीनः शब्दः प्रदेयः । परन्तु एतदभावात् अत्र अनवीकृतता दोषः ।

१२- सनियमपरिवृत्तता— यत्र नियमत्वेन वक्तुं योग्यः शब्दः अनियमत्वेन व्यवह्रियते तत्र अयं दोषः भवति । यथा—

"यत्रानुल्लिखितार्थमेव निखिलं निर्माणमेतद्विधे
रुत्कर्षप्रतियोगि कल्पनमपि न्यकारकोटिः परा ।
याता प्राणभृतां मनोरथ गतिरुल्लङ्घ्य यत्संपद-
स्तस्याभासमणीकृताश्मसुमणेरश्मत्वमेवोचितम्".

अत्र श्लोके, "अन्येषां मणीनां मणि निमित्तं योग्यतानास्ति । परन्तु यदा ते चिन्तामणेः आभासं प्राप्नुवन्ति तदा मणिपदवाच्यतां यान्ति इति कथन स्थले "च्छायामात्रमणीकृताश्मसुमणेः" इति वक्तव्यम् । परन्तु एतत् नकृत्वा "तस्याभास मणी" इति कथनात् मणीनां मणिनिमित्तं अन्ये गुणाः आसन् इति प्रतीतिर्जायते । अतः अत्र सनियम परिवृत्तता दोषः ।

१३ अनियम परिवृत्तता—

"वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुस्थ वीर्य्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते ! तेऽम्बुपानाभिलाषः"

यत्र अनियमत्वेन रचयितुं योग्यः शब्दः नियमत्वेन (अवधारणपूर्वकम्) प्रयोज्यते तत्र अयं दोषः भवति । "वक्त्राम्भोजे सरस्वती" इति कथनेन सरस्वती नद्याः आरोपणं भवति । परन्तु 'शोण एवाधरस्ते" इति "एव" पदेन अवधारण करणात् "तवाधरः नूनमेव शोणः नदः" इति अर्थः भवति । अत्रैव अवधारणं विहाय रूपकत्वेन अधरस्थाने शोण-नदस्य वर्णनं करणीयम् । एतत् विना नियमत्वेन स्थापनात् अन्यत्र रूपके बाधा भवति । येन अयं दोषः जातः ।

१४– विशेषपरिवृत्तता—

"श्यामां श्यामलिमानमानयतभोः सान्द्रैर्मषी कूर्चकै-
र्मन्त्रं तन्त्रमथप्रयुज्य हरत श्वेतोत्पलानां श्रियम् ।
चन्द्रं चूर्णयतक्षणाच्च कणशः कृत्वाशिलापट्टके
येनद्रष्टु मह क्षमे दशदिशः तद्वक्त्रमुदाङ्किताः"

"ज्योत्स्नीज्योतिष्मती रात्रिज्योत्स्नाचन्द्रमसः प्रभा" इति शाश्वतः । श्लोकेत्र श्यामाशब्दः रात्रिविशेषार्थे बिवक्षितः । एतेन कृष्णपक्ष रात्रिरपि ग्राह्या भवति । परन्तु अत्र कवेः शुक्लपक्षरात्रिं प्रति

विवक्षा : "श्यामा" इति कथनेन केवलं शुक्लरजनीं न बोधयित्वा रात्रिविशेषं बोधयति । अतः अत्र विशेषपरिवृत्तता दोषः । श्यामा स्थले ज्योत्स्नीति पठनेन नायं दोषः ।

१५- अविशेषपरिवृत्तता— (सामान्यपरिवृत्तता)

"कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नान्यमूनि मकरालय मावमंस्थाः
किं कौस्तुभेन विहितो भवतो न नाम याच्ञा प्रसारित करः
पुरुषोत्तमोऽपि"

अत्र "कौस्तुभेन" इति योगात् केवलं कौस्तुभस्य उपकारकत्वेन अन्य रत्नानां अवमाननं जायते । येन विवक्षितार्थः सुष्ठुतया न प्रतिभाति । यदि कौस्तुभ स्थाने "एकेन किं नविहितो भवतः न नाम:" इति स्यात् तर्हि विवक्षितार्थस्य प्रतीतिः सुष्ठु जायते । परन्तु एतदभावात् अत्र दोषः ।

१६- साकांक्षता—

"अर्थित्वे प्रकटी कृतेऽपि न फल प्राप्तिः प्रभो प्रत्युत
द्रुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया
उत्कर्षं च परस्य मानयशसो विस्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते"

अत्र श्लोके स्त्रीरत्नमित्यनन्तरं उपेक्षितुमितिपदं प्रति आकांक्षा जायते । अनेन पदेन विना "कथं मृष्यते" इति कथनात् अन्वयासम्भवः भवति, येन विवक्षितार्थस्य अन्यप्रतीतिर्जायते । अतः साकांक्षता दोषः ।

१७- अपदयुक्तता—

"आज्ञा शक्रशिखामणि प्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनिपदं लङ्केति दिव्यापुरी।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग् वरोलभ्यते।
स्याच्चेदेष न रावणः क्वनु पुनः सर्वत्र सर्वे गुणाः"

यस्य पार्श्वे गरीयान् एकोदोषो वर्तते, सः दोषः तस्य सकलान् गुणान् आच्छादयति। रावणस्य उत्कर्ष पादत्रितये उक्तः। पुनः "स्याच्चेदेष न रावणः" इति कथनात् तदुत्कर्षस्य हानिः संजाता, इयं कवेः विवक्षा। अनन्तरं "क्वनुपुनः सर्वत्र सर्वे गुणाः" इति कथनात् रावण निन्दास्थगनं भवति। अतः प्रकृतार्थकविरुद्धार्थकपद शालित्वमपद युक्तत्वम्।

१८- सहचरभिन्नता—

"श्रुतेन बुद्धिः व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा
निशा शशाङ्केन धृतिः समाधिना नयेन चालङ्क्रियते नरेन्द्रता।"

अत्र श्रुतेन बुद्धिः भूष्यते इत्यादि उत्कृष्टवर्णना समये व्यसनमूर्खतयोः निकृष्टयोः वर्णने सहचर भिन्नता जायते। उत्कृष्टानां निकृष्टानां वा वर्णन काले यदि उभयोर्मिश्रणमाश्रित्य वर्णनं क्रियते तर्हि सहचर भिन्नता दोषः आपतति।

१९- प्रकाशित विरुद्धता—

"लग्नं रागावृताङ्ग्या ..."

उदाहृते पद्ये लक्ष्मीः राज्ञः समीपात् दूरं गच्छतीति निन्दा रूपः अर्थः बुध्यते । यतः स्तुति माध्यमेन निन्दा रूपः अयं श्लोकः । विरुद्धार्थ प्रकाशनात् अत्र प्रकाशित विरुद्धता दोषः ।

२०- विध्ययुक्तता दोषः—

"प्रयत्न परिवोधितः स्तुतिभिरद्य शेषेनिशा—
मकेशवमपाण्डवं भुवनमद्य निः सोमकम्
इयं परिसमाप्यते रणकथाद्य दोः शालिना—
मपैतु रिपुकाननातिगुरुरद्य भारोभुवः ।"

"स्तुतिभिः वोधितः सन् अद्य निशां शेषे" इति कथनेन शयनात् प्रागेव स्तुतिः करिष्यते इति अर्थः प्रकाशी भवति । परन्तु न कश्चित् शयनात् प्राक् स्तुतिभिः वोधितः भवति, प्रत्युत यः शेते सः शयनानन्तरं वोधनार्थं स्तूयते । अत्र अयं तावत्विधिः । परन्तु "वोधितः सन् शेते" इति कथनेन विध्ययुक्तता जाता । अतः दोषः ।

२१- अनुवादायुक्तता—

"अरे ! रामाहस्ताऽभरण भसलश्रेणिशरण
स्मर क्रीडा व्रीडा शमन विरहि प्राणदमन !
सरोहंसोत्तंस प्रचलदल नीलोत्पल सखे
सखेदोऽहं मोहं श्लथय कथय क्वेन्दु वदना ।"

श्लोकेऽस्मिन् कश्चित् विरही नीलोत्पलं ब्रूते, हे सखे ! कथय सामे इन्दुवदना क्वाऽस्ते । विरहि पुरुषस्य मोह श्लथन प्रार्थनायां विरहिप्राणदमनत्वेन अनुवादः न युक्तः । यतः, इदं वचः विरहि॰ प्राणविरोधि ।

२२. त्यक्त पुनः स्वीकृतता =

"लग्नं रागा वृताङ्ग्या सुदृढमिह ययैवासि यष्ट्यारिकण्ठे
मातङ्गानामपीहोपरिपरपुरुषै याच दृष्टापतन्सी
तत्सक्तोपं स किञ्चिद् गणयति विदितं तेऽस्तु तेनास्मिदत्ता
भृत्येभ्यः श्रीनियोगात् गदितुमिव गतेत्यम्बुधिं यस्यकीर्त्तिः ।"

अत्र त्यक्तस्य पदस्य ग्रहणमर्थात् आदौ त्यक्तस्य पदस्य पुनः ग्रहणं तत्र अयं दोषः भवति । अत्र "विदितमस्तु" इति क्रियापदम् । वाक्यार्थ-कर्मत्वेन "किञ्चित्" न गणयतीति वर्तते । अनेन कर्म पदेन साकं विदितमस्तु क्रियापदस्य संयोगात् वाक्यसमाप्तिर्भवति । पुनश्च "तेनाऽस्मिदत्ता "भृतेभ्य" इति कर्मणः पुनः ग्रहणे त्यक्त पुनः स्वीकृतादोषः ।

२३- अश्लीलता—

"हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषणः
यथास्य जायते पातो न तथा पुनरुन्नतिः ।"

अस्य श्लोकस्य अर्थः पक्षे एवम्भवति— परदोषान्वेषी कश्चित् यदि स्वस्यभावात् हिंसामाचरति तर्हि तस्य पतनं यथा- आशु भवति तथा उन्नतिः आशु न भवति ।

पक्षान्तरे— पुरुषस्य सुरत क्रीडायां यथा लिङ्गपतनं भवति न तस्य आशु पुनः उत्थानमिति । अत्र द्वितीयार्थः अश्लीलार्थ वाचकः । अतः अश्लीलता दोषः ।

**प्रश्नः ३६- उपर्युक्त दोषावलीनां क्वचिद्दोषत्वं गुणत्वं वा प्रकाशयत ।**

उत्तरम्— सर्वथा हेयस्वभावत्वं नित्यदोषत्वमिति नियमा केषाञ्चित् दोषानां नित्य दोषत्वम् । ये दोषाः स्थल विशेषे क्वचि अदोषत्वं, गुणत्वं, अदोषागुणत्वं वा भजन्ते ते अनित्य दोषाः एतेषां क्वचित्अदोषत्वं गुणत्वं वा भवति तत् वक्षमाणरी प्रकाश्यते ।

१- ख्यातेऽर्थे निर्हेतोरदुष्टता—

"चन्द्रंगता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्या
उमामुखं तु प्रतिपद्यलोला द्विसंश्रयां प्रीतिमवापलक्ष्मीः"

यत्र अर्थस्य ख्यातिरस्ति तत्र हेतोरभावेऽपि न दोषो भवति । श्लोके रात्रौ चन्द्रशोभा पद्मगुणं नोपभुनक्ति इति वर्णितम् । प सकोंचनमत्र हेतु । एवं दिवा पद्मशोभा चन्द्रगुणं न भुनक्ति । चन्द्रस्य अदर्शनमेव हेतुः । एतद् हेतु द्वयस्य ख्यातिः सर्वजनवि अतः हेतोरनुपादानेऽपि अत्र न दोषः ।

२- अनुकरणेतु सर्वेषाम्—(अदोषता)

अन्येन दूषितं शब्दं यदि अपरः अनुसरति (इति अमुक उक्तिः) इति रीत्या तर्हि तत्रापि न दोषः । यथा—

"मृगचक्षुसमद्राक्षमित्यादि कथयत्ययम्
पश्चैष च वियत्यादि सुवानमयजेति च"

श्लोकस्य प्रथमपादे अद्राक्षमिति पदं श्रुतिकटुतया शृङ्गारं रस-प्रतिकूलम् । "गवित्यादि" इतिस्थले "प्रकृतिः केवला न योजनीया" इति व्याकरणदिशा अत्र "गो" पद व्यवहारात् च्युतसंस्कृतिता दोषः । सुत्रामाणमिति आम्नातोऽपि अयं शब्दः न कविभिः प्रयुज्यते । अतः अप्रयुक्तता दोषः । सत्सु अपि एतेषु दोषेषु परोक्तानुकरणात् नात्र दोषः इति मन्तव्यम् ।

३- वक्त्रादि औचित्यात्- क्वचित् दोषः गुणः भवति, क्वचित् न दोषः न गुणश्च भवति ।

दोषस्य गुणत्वम्-

"दीधीङ् वेवीङ् समः क्वचित् गुणवृद्ध्योरभाजनम्
क्विप्प्रत्यय निभः कश्चित् यत्र संनिहिते न ते"

व्याकरणानुसारं दीधीङ् वेवीङ् धातु द्वयस्य गुणः वृद्धिश्च न भवति । तद्वत् यत्र जने गुणवृद्धी न स्तः सः क्विप् प्रत्ययतुल्यः । अत्र वक्तृ-बोद्धव्यौ व्याकरणशास्त्राभिज्ञौ । अन्येषां कृते एवं भूतः पदविन्यासः यद्यपि दुर्बोधः तथापि वैयाकरणयोर्मध्ये आलापयोगात् न कष्टता दोषः । प्रत्युत गुणः तत्र ।

क्वचित् दोषः न गुणत्वं वा दोषत्वं याति—
यथा—

"शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः
घर्मांशोस्तस्य वोऽन्त र्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम्"

अत्र श्लोके अनुप्रास प्राचुर्य्यात् शब्दालंकारान्तर्गतं इदं काव्यम्, अत्र सूर्यविषयक रतिभावे विद्यमानेऽपि न सः प्रधानतया विद्यते । अतः काव्यमिदं नीरसम् । नीरसतया अनुप्रासस्य प्राचुर्य्यात् च अत्र कष्टत्व दोषः । परन्तु अयं कष्टत्वदोषः काव्यपक्षे न गुणः । इति उत दोषः भवति । श्रवण पात्रेण अनुप्रासस्य मनोहारकत्वात् ।

४- अप्रयुक्तनिहतार्थौ श्लेषादौ अदुष्टौ ।—

"क्वचिन्न दोषो न गुणः" इत्यस्य उदाहरणान्तरम्-

"येनध्वस्तमनोभवेनवलिजित् कायः पुरा स्त्री कृतो-
यश्चोद्वृत्तभुजङ्गहारवलयोगङ्गां च योऽधारयत् ।
यस्याहुः शशिमत् शिरोहर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धक क्षयकरस्त्वां सर्वदोमाधवः"

यदा अत्र माधव पक्षे अर्थः क्रियते तदा शशिमत् शब्दः राहौ अप्रयुक्तत्वं भजते । क्षयपदं गृहार्थे निहतार्थत्वं भजते । परन्तु श्लेषालङ्काराय एतयोरुपादानं न दोषाय कल्प्यते । न वा एतदुपादानेन कश्चित् गुणः अत्र भवति । अप्रयुक्त निहतार्थत्वयोः अलङ्कारे सुप्रयोजनाभावात् ।

५- अश्लीलता क्वचिद् गुणः—सुरतकाले तथा शान्त कथासु अश्लीलता दोषस्य गुणः भवति । यथा—

सुरते—

"करिहस्तेन संवाधे प्रविश्यान्तर्विलोडिते
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते"

करिहस्तस्य अर्थः कामशास्त्रविशारदैरुक्तः यत्—

"तर्जन्यनामिके युक्ते मध्यमा स्यात् बहिष्कृता
करिहस्तः समुद्दिष्टः कामशास्त्रविशारदैः"

अपिच अत्र व्यवहृतं ध्वजपदं लिङ्गं तथा साधनपदं स्त्री वराङ्गं स्मारयति। अतः अत्र अश्लीलतां दोषः। अपिच "करिहस्तः" (योनि काठिन्य शैथिल्यार्थं निर्दिष्टा काचित् अङ्गुलि मुद्रा) अश्लीलतां स्मारयति। परन्तु सुरतारम्भे एतत् प्रयोगात् न दोषः। प्रत्युतगुणः।

शमकथासु—

"उत्तानोच्छून मण्डूकपाटितोदरसंनिभे
क्लेदिनि स्त्री व्रणे सक्तिरकृमेः कस्य जायते"

अत्र स्त्री वराङ्गं विपाटितोदर्ध्वमुखेन मण्डूकेन साकं तुलितं भवति। अतः अश्लीलता दोषः। परन्तु वैराग्य जननार्थं एतद् प्रयोगात् न दोषः। प्रत्युत जुगुप्साश्लीलस्य गुणः अत्र भवति। एवमन्येऽपि दोष प्रतिप्रसवाः तर्क्याः।

**प्रश्नः ३७- रसदोषस्य नामान्युल्लिख्य उदाहरणेषु योजयत ?**

उत्तरम्— ये खलु साक्षात् रसमपकर्षयन्ति त एव रसदोषनाम्ना व्यपदिश्यन्ते।

ते यथा—

"व्यभिचारि रसस्थायिभावानां शब्दवाच्यता
कष्टकल्पनया व्यक्तिरनुभाव विभावयोः

प्रतिकूल विभावादिग्रहो दीप्तिः पुनः पुनः
अकाण्डे प्रथनच्छेदौ, अङ्गस्याप्यति विस्तृतिः
अङ्गिनोऽननुसंधानं प्रकृतीनां विपर्ययः
अनङ्गस्याभिधानञ्च रसे दोषाः स्युरीदृशाः"

१- व्यभिचारिभावस्य स्वशब्दकथनात् दोषः—

"सव्रीडादयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मय रसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्षा जह्नुसुतावलोकन विधौ दीना कपालोदरे
पार्वत्या नवसंगम प्रणयिनो दृष्टिः शिवायास्तु वः"

अस्मिन् श्लोके व्रीडा, करुणात्रासविस्मयादीनां व्यभिचारिभावानां स्वशब्देन कथनात् दोषः जातः ।

२- रसस्य स्वशब्दकथनात् दोषः—

"तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूल लोकिताम्
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः"

"रसः निरन्तरो जातः" इति कथनेन रस शब्दः स्वशब्देन उच्चार्यते अतः रसस्य स्वशब्दवाच्यता दोषः ।

३- स्थायिभावस्य स्व शब्द कथनात् दोषः—

"संप्रहारे प्रहरणैः प्रहाराणां परस्परम्
ठणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत्"

वीररसस्य स्थायिभावः उत्साहः । उदाहृते पद्ये स्थायिभावस्य उत्साहस्य स्वशब्दकथनात् दोषः ।

४- कष्टकल्पनया अनुभावस्य व्यक्तिः—

"कर्पूर धूलि धवलद्युति पूरधौत
दिङ्मण्डले शिशिर रोचिषि तस्य यूनः
लीलाशिरोंशुकनिवेश विशेष क्लुप्ति—
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा"

चन्द्रोदये नायिका शिरसि अंशुकपातव्याजेन स्वस्य उन्नत स्तनद्वयं युवकं प्रति दर्शयति । अत्र युवकयुवत्योरन्योन्यावलोकनमनुभावः । परन्तु अयं अनुभाव स्पष्टतया न प्रतिभाति । यतः मार्गे कतियुवकाः युवतयोवा न व्रजन्ति ? सर्वत्र किमु सर्वेषां अवलोकनलालसा अस्ति ? तर्हि एतयोः परस्परावलोकन कथं भवेदिति कृत्वा अनुभावस्य सत्ताऽपि नास्ति । परन्तु चन्दोदये एतद् भवेदिति अनुमित्या अनुभावस्य कल्पना क्रियते । कल्पनेयं कष्टेन भवति । अतः अनुभावस्य कष्टकल्पना योगात् दोषः ।

५- कष्टकल्पनया विभावस्य प्रतीतिः—

"परिहरति रतिं मतिं लुनीते स्खलतिभृशं परिवर्ततेच भूयः ।
इतिवतविषमा दशास्य देहं परिभवति प्रसभं किमत्र कुर्मः"

अस्मिन् श्लोके नायके वर्तमानस्य ललना रूपः विप्रलम्भ शृङ्गारस्य विभावः आवश्यकः । सः शब्देन न कथितो वर्तते । रतिपरिहारादिभिः अपि सः नाक्षेपणीयः । यतः रतिपरिहारादयः करुणावीभत्स-भयानकेष्वपि सन्ति । प्रकरणानुसंधानात् विलम्बेन तस्य प्रतीतिः अतः दोषः

६- प्रतिकूल:विभावादिग्रहः—

प्रकृत रसस्य यः विरुद्धः रसः यदि तस्य विभावानुभावव्यभिचारि भावानां ग्रहणं भवति तर्हि तत्र प्रकृत रसमालिन्यात् अस्य दोषस्यावकाशः भवति। यथा—

"प्रसादे वर्तस्व प्रकटयमुदंसंत्यजरुषं
प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिंचतु वचः।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे ! प्रत्येतुं प्रभवति गतः कालहरिणः"

अत्र श्लोके वस्तुतः शृङ्गार रसः वर्तते। शान्तरसः शृङ्गारस्य विरोधी। शृङ्गार रसवर्ण्णना प्रसङ्गे कविना चतुर्थपादे "नमुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः" इति यत् व्यवहृतं तेन शान्तरसस्य स्थायिभावः निर्वेदः प्रकाशितोभवति। एतेनापि शान्तस्य विभावानुभावादीनां ग्रहणं भवति। अतः दोषः।

७- पुनःपुनर्दीप्तिः— काव्ये अङ्गत्वेन विवक्षितस्य रसस्य वारम्वारं यदि परिप्रकाशः भवति, तर्हि अस्यदोषस्यापतनं भवति। अङ्गिरसस्य भृशं वर्णनात् न दोषः। महाभारतादौ अङ्गिनः शान्तस्य भृशं प्रयोगेऽपि न वैरस्यं जायते सहृदयानाम्। कुमारसम्भवे मदनदाहानन्तरं रतिदेव्याः क्रन्दनस्य पुनः पुनः वर्णनात् अस्य दोषस्यागमनं भवति।

८- अकाण्डे प्रथनता—

अकाण्डे, असमये प्रथनं, रसविस्तारः यत्र तत्र अयं दोषः भवति। यथा वेणीसंहारे अनेकेषां वीराणां युद्धाय ताडितडिण्डिमानां स्वपक्षीयानां विनाशकाले भानुमत्या सह सम्भोग वर्णनम् । तस्मिन् काले दुर्योधने वीररसवर्णनं समीचीनं भवेत् । परन्तु तद्विहाय शृङ्गारवर्णनात् अकाण्डे प्रथनता दोषः ।

९ अकाण्डे च्छेदता— यत्र असमये रसस्य विच्छेदः भवति तत्र अयं दोषोभवति । यथा— वीरचरित नाटके श्रीरामपरशुरामयोः युद्धे सन्निकटे (वीर रसस्य आसन्नत्वात्) वीररसवर्णनं विहाय विवाहानन्तरं कंकणमोचनाय गच्छामीति राघवस्य उक्तिवर्णनं रसच्छेदकं भवति । येन रामस्य भीरुता प्रकटिता भवति । अतः दोषः ।

१०- अङ्गस्यातिविस्तृतिता— यत्र अङ्गस्य अप्रधानस्य प्रतिनायकादेः वर्णनं अत्यन्ततया भवति तत्र अयं दोषोभवति । यथा-हयग्रीववधाख्ये नाटके नायकः विष्णुः । प्रतिनायकः हयग्रीवः । तत् प्रतिनायकस्य हयग्रीवस्य जलक्रीडावनविहाररतोत्सवादीनां यथा वर्णनं भवति. न तथा नायकस्य कृष्णस्य । परन्तु तत्र नायकस्य एतद् वर्णना अधिकतरी भवेत् । एतदभावात् दोषः ।

११-अङ्गिनोऽननुसंधानम्— यत्र प्रधान नायकस्य नायिकाया वा अननुसंधानं, (विस्मरणम्) भवति तत्र अयं दोषोभवति । यथा—

रत्नावलीनाटिकाया नायिका सागरिका भवति । वाभ्रवनाम्नः सिंहलेश्वर कञ्चुकिनः आगमनेन राजा वत्सराजः विजयवर्मवृत्तान्त श्रवण तत्परः प्रधान नायिकां सागरिकां विस्मरति । एतद्वर्णनात् अत्र नायिकायाः विस्मरणं जातम् । अतः अयं दोषः जातः ।

१२- प्रकृतीना विपर्ययः- यत्र प्रकृतौ (नायके नायिकायां वा) यत् वर्णनं समीचीनं तत् विहाय वैपरीत्य वर्णनं क्रियते तत्र अस्य दोषस्यागमनं भवति । अर्थात् यत्र धीरोदात्तनायकः धीरोद्धत नायकवत् आचरतीति वर्णनं भवति तत्र प्रकृति विपर्ययः जातः । यस्मिन् नायके नायिकायां वा यत् औचित्यं तदेव उपनिबद्धव्यमिति नियमस्या रक्षणे अयं दोषः भवति ।

१३- अनङ्गस्य वर्णनम्— अनङ्गस्य, रसानुपकारकस्य वर्णनं यत्र भवति तत्र अयं दोषोभवति । यथा— कर्पूरमंजर्यां ( राजशेखर रचितायां) वन्दिवर्णितस्य वसन्तस्य वर्णनं प्रकृतरसस्य अनुपकारकत्वात् दोषस्थलम् । अर्थात् तत्र अङ्गत्वेन अनभिमतस्य वर्णनात् अयं दोषः जातः ।

अपरञ्च ध्वनिकृता प्रत्यपादि—

"अनौचित्यादृते नान्यत् रसभङ्गस्य कारणम्
औचित्योपनिबन्धस्तु रसस्योपनिषद्परा"

**प्रश्नः ३८- केन प्रकारेण रसदोषता विरोधताच परिहर्तव्या**

उत्तरम्— इतः प्रागेव प्रतिपादितं ये रसं रुन्धन्ति त एव दोषाः एतद्दोषानामपि स्थलविशेषे अदोषता भवति । उक्तञ्च मम्मटेन

"न दोषः स्वपदेनोक्तौ अपि संचारिणः क्वचित्" अर्थात् यत्र व्यभिचारिभावस्य असाधारणतया नानुभावसम्भवो भवति तत्र स्वशब्देन कथितस्यापि व्यभिचारिणः दोषो न भवति । यथा-

"औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमानाह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत् पुलका हरेण हसता श्लिष्टाशिवायास्तु वः" ।

पद्येऽस्मिन औत्सुक्यस्य व्यभिचारिभावस्य स्वशब्देन कथनेऽपि न दोषः । यतः नैवम्भूतः कश्चित् शब्दः अस्ति, यः औत्सुक्यस्य परिवर्तनेन व्यवहृतः सन् तथा भावं पोषयिष्यति । यद्यपि त्वरादयः केचन शब्दाः सन्ति तथापि ते न असाधारणाः । क्रोधभयादिकाले तेषां सम्भवात् ।

अपिच--

"आश्रयैक्ये विरुद्धो यः स कार्य्यो भिन्न संश्रयः
रसान्तरेणान्तरितो नैरन्तर्य्येण यो रसः ।"

एकमालम्बनमाश्रित्य स्थितयो विरुद्धरसयोर्मध्ये यदि अन्यरसनिवेशनं क्रियेत तर्हि तत्र विरुद्धयो रसयोः समावेशः न दोषाय । यथा— नागानन्दे शान्तस्य जीमूतवाहनस्य "अहो गीतम्, अहो वादित्रम्" इति उक्तौ शृङ्गारः वर्तते । नाटकस्य नायकः जीमूतवाहनः शान्तरसावलम्बी । तत्र नायिकां प्रति या शृङ्गारवर्णना कृता सा वर्णना शान्त रसस्य विरोधिनी । अतः उभयोर्मध्ये विरोधः

संजातः। परन्तु उभयोर्मध्ये "अहो गीतमिति', अद्भुत रस-सन्निवेशनात् न विरोधः। न केवलं नाटके अपिच श्लोकत्रयात्मके अपि एतद् भवेत्।

यथा--

"भूरेणु दिग्धान् नवपारिजातमालारजोवासित बाहुमध्या।
गाढंशिवाभि: परिरभ्यमाणान् सुराङ्गनाश्लिष्ट भुजान्तराला:
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान्
संवीजिताश्चन्दनवारिसेकै सुगन्धिभिः कल्पलता दुकूलैः।
विमानपर्य्यङ्कतले निषण्णाः कुतूहलाविष्टतयातदानीम्
निर्दिश्यमानान् ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन्"

अत्र "गाढं शिवाभि:" "सशोणितैः क्रव्यभुजां स्फुरद्भिः" इत्यादिभिः वीभत्सरसः स्फुटीभवति। अपिच "सुराङ्गनाश्लिष्टभुजान्तराला:" "नवपारिजातमाला रजोवासित" इत्यादिभिः शृङ्गार रसः स्फुटी भवति। उभयोर्मध्ये विरोधः वर्तते। परन्तु स्वर्गलाभाक्षिप्ततया वीररसस्य मध्ये स्थापनात् न विरोधः।

अपिच—

"स्मर्य्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः
अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम्"

यत्र प्रधान रसे विरुद्धरसः स्मर्य्यते, अथवा उभयोः साम्यं विवक्षितं भवति, अथवा अङ्गिनि (मुख्यरसे) विरुद्धरसौ यदि अङ्गत्वं व्रजतः तर्हि तत्र न विरोधभावः। यथा—

स्मर्यमाणेनादोषता—

"अयं स रशनोत्कर्षी पीनस्तन विमर्दनः
नाभ्यूरु जघनस्पर्शी नीवीविस्रंशनः करः"

भूरिश्रवसः मरणानन्तरं तच्छिन्नं करं विलोक्य रुदतीनां तत्पत्नीनां विलापवर्णना प्रसङ्गे श्लोकोऽयमुपन्यस्तः। विलाप वर्णनात् अत्र करुणरसः मुख्यः। रशनोत्कर्षी, पीनस्तनविमर्दनः, नाभ्यूरुजघनस्पर्शीत्यादि वर्णनात् शृङ्गाररसः अत्रापि स्वाद्यते। अनयोः मध्ये नित्यं विरोधभावः। परन्तु च्छिन्नकरमवालोक्य क्रन्दनरतानां स्त्रीणां शृङ्गारविषयकस्मरणात् नात्र विरोधभावः। श्लोकेऽस्मिन् शृङ्गारस्य स्मर्यमाणत्वम्।

साम्येनाथ विवक्षितः यथा—

"दन्तक्षतानि करजैश्च विपाटितानि-
प्रोद्भिन्न सान्द्रपुलके भवतः शरीरे।
दत्तानि रक्तमनसा मृगराजवध्वा-
जातस्पृहैर्मुनिभिरप्यवलोकितानि।"

जिनं प्रति कश्चित् वदति हे प्रभो! सिंही तव शरीरं करजैर्दन्तैश्च। पाटयति। अतः रक्तस्रावो जायते। एतदपि मुनयः सादरं वीक्ष्यन्ते।" शान्तरस पक्षपातिनी वर्णनेयम्। वीभत्सरसपक्षपातिनीति केचित्। अपिच शृङ्गाररसमाश्रित्य अर्थकरणे अयं अर्थः निर्गच्छति यत्— "काचित् कामुकी सुरतकाले कामुकं दन्तैः करजैश्च विक्षतं, करोति। अपरस्मिन् काले तत्चिह्नं विलोक्य अपरोऽपि कामुकः

उत्कण्ठते" अनयोः रसयोर्मध्ये विरोधभावः वर्तते, परन्तु समान विशेषण द्वारा (श्लिष्टविशेषण द्वारा) वर्णनात् न विरोधभावः।

अङ्गिनि अङ्गत्वबलेन— यदि एकस्य प्रधानरसस्य विरोधभावं समाश्रित्य अङ्गभूतौ द्वौ रसौवर्तेते तर्हि तत्र न विरोधः। यथा –

"क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भास्थलीः
पादैः पातित यावकैरिव गलद् बाष्पाम्बु धौताननाः।
भीताभर्तृकरावलम्बित करास्त्वत् शत्रुनार्य्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यत् विवाहा इव।"

अत्र राजविषयकरतिभावः प्रधानम्। अमुमेव राजविषयकरतिभावमाश्रित्य द्वौ विरोधिनौ करुणशृङ्गारौ विद्येते परन्तु अत्र नास्ति विरोधभावः। यथा विरुद्धभावापन्नयोः सेनापत्योः एकस्मिन् राज्ञि कार्य्यं करणात् न दोषः। तथा अत्रापि विरुद्धयोरपि करुणशृङ्गारयोः प्रधाने राजविषयकरतिभावे स्थितित्वात् न दोषः। एतेन अङ्गिनः न काचित् क्षति। प्रत्युत विरुद्धयोः अग्निजलयोःसाहचर्य्यात् ओदनपचनवत् लाभः।

## प्रश्नः ३९- गुणालङ्कारयोः सामान्यलक्षणमभिधाय उभयोर्भेदः निर्णयः।

उत्तरम्— विदन्ति खलु विद्वांसः काव्यशरीरे कः गुणः, कः अलङ्कारश्च। यथा मानवशरीरे दयादाक्षिण्यादयः गुणाः सन्ति तथा काव्यशरीरे माधुर्य्यौजः प्रसादाख्याः गुणाः सन्ति। अपिच शरीर

भूषणार्थं यथा अलङ्कारधारणं तथा काव्यशरीरभूषणार्थं अलङ्कार-संस्थापनम् । अतः मम्मटेन प्रतिपादितम्—

"ये रसस्याङ्गिनोधर्माः शौर्य्यादय इवात्मनः
उत्कर्षहेतवस्तेस्यु रचलस्थितयोगुणाः"

काव्ये अङ्गिरूपेण रसः वर्तते। ये तस्य रसस्य धर्माः, आत्मनः शौर्य्यादिवत् अपिच नियतस्थितयः (यावत्कालं रसःविद्यते तावत्कालं ये काव्येतिष्ठन्ति) त एव गुण नाम्ना व्यपदिश्यन्ते।

शरीर शोभानिमित्तं यथा अलङ्काराणां आवश्यकता तथा काव्यशरीर भूषार्थं ये आवश्यकाः भवन्ति ते अलङ्काराः। उक्तञ्च—

"उपकुर्वन्ति तं सन्तं येङ्गद्वारेण जातुचित्
हारादि वदलङ्कारा स्तेऽनुप्रासोपमादयः।"

अलङ्काराः आत्मिनि अस्थिराः, परन्तु शौर्य्यादयः स्थिराः । काव्ये-अपि अलङ्काराः अस्थिराः परन्तु माधुर्य्यादयः स्थिराः इति अनयोर्मध्ये भेदः।

अस्मिन् भेदनिर्णयविषये भट्टोद्भटादिभिर्यदुक्तम्— "लौकिकाः गुणालङ्काराः (शौर्य्यादयः, हारादयश्च) समवाय वृत्त्या संयोगवृत्त्याच शरीरिणि वर्तन्ते। अतः तयोर्भेदोऽस्तु। परन्तु काव्य अलौकिकानां गुणालङ्काराणां केवलं समवायवृत्त्यास्थितिरिति कृत्वा तद्भेदः नोपपन्नः। काव्ये गुणालङ्कारयोः भेदः अस्तीति गड्डलिकाप्रवाहः। परन्तु मम्मटः एतत् न स्वी कृत्य उभयोः पृथग् लक्षणं निर्माय भेदं दर्शयति।

वामनेन यदुक्तम्— "काव्यस्य शोभावर्धकाः धर्माः गुणाः । ततोऽधिक हेतवः अलङ्काराः ।" तदपि नयुक्तम् । यतः वामनेन स्वीकृतम्• "काव्यस्यात्मारीतिः" सा रीतिः त्रिधा, पाञ्चालीगौडी-वैदर्भीभेदेन । सर्वगुणव्यञ्जकवर्णवती वैदर्भी । प्रसादौजोगुण व्यञ्जकवर्णवती गौडी । माधुर्य्यप्रसादवदक्षरयुक्ता पाञ्चाली । वैदर्भीरीत्यां सर्वेगुणाः सन्ति । अतः सा काव्यस्य आत्मा भवतु । यत्रतु (गौड्यांपाञ्चाल्याम्) न सर्वे गुणाः सन्ति कथं तत् काव्यस्यात्मा-स्थानीयं भवितुमर्हति ? तत्र सर्वगुणाभावात् काव्यशोभाकरानुत्पत्तेः वामनस्यापि एतत् विलक्षणं यत् गुणाः न रस धर्माः । नापि गुणा त्रयः । अपितु शब्दार्थभेदेन विंशतिगुणाः ।

## प्रश्नः ४०- वामनस्य शब्दगुणाः मम्मट गुणेषु कथमन्त-र्भुक्ताभवन्तीति युक्त्याप्रतिपादयत ।

उत्तरम्— आलङ्कारिकशिरोमुकुटायमानः वामनः । असौ काव्यालङ्कारः" इति ग्रन्थस्य कर्ता । अस्यमतेन शब्दार्थ भेदेन गुणानां विंशतिः भेदाः सन्ति । ते यथा—

"श्लेषः[1] प्रसादः[2] समता[3] माधुर्य्यं[4] सुकुमारता[5]
अर्थव्यक्ति[6] रुदारत्वमोजः[7] कान्ति[8] समाधयः[9]"[10]

मम्मटः एतान् सर्वान् नाङ्गी करोति । तस्यमतेन—

"केचिदन्तर्भवन्त्येषु दोषत्यागात् परेश्रिताः
अन्ये भजन्ति दोषत्वं कुत्रचिन्नततोदश"

अर्थात् वामनस्य ये गुणाः (शब्दगताः) तेषु केचित् मम्मटस्य गुणेषु अन्तर्भुक्ता भवन्ति । अन्ये दोष दुष्टत्वात् न गुणभाजो भवन्ति । एतद् प्रतिपाद्यते— वामनमते यः अनेक पदानां एकपदवत् द्योतनात्मा श्लेषः, यः आरोहावरोह क्रमः समाधिः, या विकटत्वलक्षणा उदारता, यः ओजोमिश्रितशैथिल्यात्मा प्रसादः, एतेसर्वे मम्मटस्य ओजोगुणान्तर्भुक्ताभवन्ति । वामनस्य माधुर्य्यगुणः मम्मटस्य माधुर्य्य गुणे अन्तर्भवति । वामनस्य अर्थव्यक्तिगुणः मम्मटस्य प्रसादगुणे अन्तर्भवति । इत्थं वामनस्य सप्तगुणाः मम्मटस्य गुणत्रयान्तर्गताः भवन्ति । अपरे ये वामनस्य शब्दगुणाः ते कथं दुष्टाः येन गुणत्वं नार्हन्ति तत् मम्मटः प्रकाशयति ।

वामनस्य यः समतागुणः सः दोषयुक्तः । यतः समतागुणः मार्गाभेदरूपः । अर्थात् श्लोकस्य आरम्भः यदि कोमलवर्णेन जातः तर्हि समापनमपि तेनैव क्रमेण भवेत् । यदि अय नियमः स्यात् तर्हि समतागुणः भवति । परन्तु मम्मटः एतत् दोषस्थलमिति सूचयति । यथा—

"मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः !
सारङ्गा महिषा मदं व्रजथ किं शून्येषु शूरा नके ?
कोपाटोप समुद्भटोत्कटसटा-कोटेरिभारेः पुरः
सिंधुध्वानिनि हुंकृते स्फुरति यत् तद् गर्जितं गर्जितम्"

अस्मिन् श्लोके मसृण वर्णैः रचनाजाता यदि तेनैव क्रमेण समापनं भवेत् तर्हि अन्तिमे सिंहाभिधाने परुषवर्णाभावात् दोषः भवेत्

अतः समता नगुणत्वमर्हति। वामनस्य यः अपारुष्यरूपः सुकुमारगुणः तथा औजल्यरूपाकान्तिः, एतौ द्वौ कष्टत्वग्राम्यत्वदोषदूरीकरणेन सम्भवतः। अतः एतौ अपि न गुणौ। दोषरहितत्वंनगुणत्वमित्युक्तित्वतः। अनेन प्रकारेण वामनस्य दश शब्दगुणाः निरस्ताः।

## प्रश्नः ४१- वामनस्य दश–अर्थगुणान् खण्डयत–

उत्तरम्— पूर्वोक्ताः ये वामनस्य "श्लेषप्रसादादि क्रमेण" दश-शब्दगुणाः तेऽपि अर्थगुणनाम्ना ख्याताः। केवलं लक्षणं भिन्नम्। मम्मटस्य मतेन एते दश अर्थगुणाः अपि न समीचीनाः। यतः वामनस्य यः ओजोगुणः प्रौढ्यन्तर्गतः सः केवलं वैचित्र्य ग्राहकः। प्रौढेः पञ्चभेदेषु कथं वैचित्र्यमस्ति तत् आकलयन्तु—

1 2
"पदार्थे वाक्यरचना वाक्यार्थे च पदाभिदा
3 4 5
प्रौढिर्व्यास-समासौ च साभिप्रायत्वमस्य च"

१- एकपदार्थस्य वहुभिः पदैः अभिधानं" पदार्थे वाक्यरचनम्"। यथा— "चन्द्रः" इति वक्तव्ये चन्द्ररूपस्य एकपदार्थस्य अत्रिलोचन-समुत्थं ज्योतिरिति वहुभिः पदैरभिधानम् केवलं वैचित्रमात्रम्।

२- वहूनां पदानामेकपदेन कथनम् "वाक्यार्थेच पदाभिदा" यथा- "कान्तार्थिनी लताकुञ्ज व्रजतीत्यादौ वहुपदवक्तव्ये केवलं "अभिसारिका" इति एकपदेन कथनम्। एतदपि वैचित्र्यमात्रम्।

३- एकस्य वाक्यस्य अनेकवाक्यैरभिधानम् "व्यासः" (विस्तारः) यथा- "परस्वं नापहर्तव्यमिति" एकवाक्यस्य वक्तव्ये "परान्नं नापहर्तव्यम्" "परवस्त्रं नानेतव्यम्" "पराभरणं न चौर्य्यम्" इत्यादिभिः बहुवाक्यैः कथनम् व्यासः। एतदपि चमत्कारावहम्।

४- अनेक वाक्यानां एक वाक्येन कथनम् "समासः" (संक्षेपः) यथा—

"ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः"

अनेक वाक्यार्थीगतस्य आमन्त्रणादेरुक्तिः अत्र केवलं "हिमालयमामन्त्र्य" इति एकेन वाकेन कथिता भवति। अतः समासः जातः (संक्षेपः) एतदपि चमत्कारजनकम्।

५- यत्र विशेषणस्य सार्थकं भवति तत्र साभिप्रायत्वं (अभिप्रायेण सह वर्त्तमानम्) भवति । यथा- "कुर्य्यां हरस्यापिपिनाकपाणेः" इति स्थाने पिनाकपाणेः इति विशेषणस्य सार्थकता चकास्ति । कन्दर्पः वदति अहं पिनाकधनुर्धारिणः हरस्यापि धैर्य्यं हरिष्यामि । पिनाकधनुर्योगात् हरस्य महत्त्वं वर्धते तथाभूतस्य हरस्य धैर्य्यहरणात् कन्दर्पस्यापि महत्त्वं अधिकं वर्धते । अतः विशेषणस्य सार्थकता अस्ति ।

एते पञ्चप्रकाराः ये प्रौढिसञ्ज्ञकाः वामनस्य ओजोगुणान्तर्वर्तिनः ते सर्वे वैचित्र्यवाहकाः । प्रथम चतुष्टयाभावेऽपि काव्य व्यवहारः साधीयान् भवेत् । "चन्द्रः" इति पदमेकमनुक्त्वा "अत्रि लोचनसमुत्थं ज्योतिरिति कथनेन न कापि विशेषता । किन्तु प्रतीतिविलम्बः जायते ।

अपिच-अपुष्टार्थत्वाधिकपदत्वानवीकृतत्वामङ्गलरूपाश्लीलत्वग्राम्यत्वादीनां निराकरणेन साभिप्रायत्वरूपमोजः (विशेषणयुक्तम्) अर्थं वैमल्यत्मा प्रसादः, उक्तिवैचित्र्यमात्ररूपं माधुर्य्यमपारुष्य रूपं सौकुमार्य्यं, तथा अग्राम्यत्व रूपोदारता इति स्वीकृताः। वामनस्य अर्थगुणान्तर्वर्तिनौ अर्थव्यक्तिकान्तिगुणौ स्वभावोक्त्यलङ्कारे रसध्वनौ गुणीभूत व्यङ्ग्ये चान्तभुक्तौ भवतः।

वामनस्य यः अर्थश्लेषः, तत्रापि गुणत्वं नास्ति। सः क्रमकौटिल्य-अनुल्वणत्वोपपत्तियुक्तः। (क्रमः=क्रिया समूहः, कौटिल्यं=विदग्ध चेष्टितम, अनुल्वणत्वम्=प्रसिद्धित्वम्, एतेषामुपपत्तिरुपयोगः) एतेन केवलं कवेः पाण्डित्वं प्रकाशितं भवति। वामनस्य यः समतागुणः सः दोषाभावमात्रम्। (भग्नप्रक्रमं दोषाभावः समतागुणः। दोषाभावत्वं न गुणत्वमिति योगात्) समाधेरपि गुणत्वं नास्ति। वामनमते "समाधिरर्थदृष्टिश्च"। अयोनि-अन्यच्छायायोनिरूपात्मकस्य अर्थद्वयस्य दृष्टिः (दर्शनम्) यत्र सः समाधिः।

अयोनिः—न विद्यते योनिः (प्रसिद्धिः) यस्य सः अयोनिः। सर्थात् कविसंप्रदायेतर वर्णना। यथा— "सद्योमुण्डितमत्तहूणचिवुकं प्रस्पर्द्धि नारङ्गकम्" मत्तहूणष्य (सद्योमुण्डितस्य) चिवुकं नारङ्गफलमपि स्पर्धयामास, इति वर्ण्णना न क्वापि कविसंप्रदाये दृश्यते। अतः अयोनिः।

अन्यच्छायायोनिः— कवि परम्परया व्यवहृतां शैलीं यदि कविः प्रकारान्तरेण योजयति तर्हि तत्रान्यच्छायायोनिर्जाता।

यथा—

"निजनयनप्रतिविम्बैरम्बुनि वहुशः प्रतारिता कापि
नीलोत्पलेऽपि करमर्पयितुं विमृशति कुसुमलावी"

कवि परम्परानुरोधेन नयन नीलोत्पलयोः साम्यं सर्वजनविदितम् । परन्तु जलमध्ये प्रतिविम्बितं निजनयनमवलोक्य किमिदं नीलोत्पलमिति कुसुमलाव्याः तर्कणं प्रकारान्तरेण वर्ण्यते । अतः अत्र अन्यच्छायायोनिः । अयमर्थः वर्णितपूर्वोऽथवाऽवर्णितपूर्वः इति आलोचनामात्रम् । अतः न गुणः । अनेन प्रकारेण मम्मटेन अर्थगुण खण्डनानन्तरं उक्तम्—

"तेन नार्थगुणा वाच्याः"

## प्रश्नः ४२- मम्मटस्य गुणान् विलिख्य तेषां लक्षणानि लक्ष्येषु संगमयत ।

उत्तरम्— मम्मटः वामनस्य गुणान् खण्डयित्वा केवलं गुणत्रयमेव स्वीकरोति । अध्यात्मवादानुसारं मानवहृदि सत्त्वरजस्तमोभेदेन त्रयोगुणाः सन्ति । सम्भवतः प्रभावोऽयं मम्मटोपरि पतितः । येन सः माधुर्य्योजः प्रसादभेदेन काव्यगतगुणानां भागत्रयं करोति । अतः उक्तम्-

"माधुर्य्योजः प्रसादाख्यास्त्रयस्तेन पुनर्दश"

माधुर्य्यम्— मधुरस्य भावः माधुर्य्यम् । मधुरशब्दात् 'गुणवचन ब्राह्मणादिभ्यः ष्यञ्" इति अनुसारं माधुर्य्यस्य सिद्धिः । तल्लक्षणं

यथा—

"आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्
करुणे विप्रलम्भाख्ये शान्ते चाति शयान्वितम्"

आह्लादकत्वं नाम आनन्द स्वरूपत्वम् । सम्भोग शृङ्गारे यावान् माधुर्य्यगुणः ततोऽपि अधिकतरः करुणे, ततोऽपि अधिकतरः विप्रलम्भे ततोऽपि अधिकतरः शान्ते वर्तते । अधोलिखिताः वर्णाः माधुर्य्यस्य व्यञ्जकाः । यथा—

"मूर्ध्निवर्गान्त्यगाः स्पर्शा अटवर्गा रणौलघू ।
अवृत्तिरल्पवृत्तिर्वा माधुर्य्ये घटना तथा"

यत्र ट वर्गरहिताः स्पर्शवर्णाः (कादयोमावसानाः स्पर्शाः) वर्गान्त्य वर्णेन युक्ता भवन्ति । अपिच रकारः णकारः ह्रस्वाकारेण वर्तते, अपिच समासः यत्र न विद्यते, आहोस्वित् अवृत्तिः (अल्पसमासः) भवति, तत्र माधुर्य्य गुणस्य प्रसक्तिः । यथा—

"अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरिचिन्तनानि"

अत्र श्लोके गकारः स्ववर्गस्यान्त्यवर्णेन सम्मिलितः भवति । र कारः लघु (रेफ्) रूपेण अस्ति । अत्रापि अल्पवृत्तिः (स्वल्पसमासः) विद्यते । श्रवण मात्रेण एव मनसि आह्लादोजायते । अतः इदं माधुर्य्यस्य उदाहरणम् ।

ओजोगुणस्य— (लक्षणम्)

"दीप्त्यात्मविस्तृतेर्हेतुरोजोवीर रसस्थिति ।
बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च"

दीप्तिर्नाम ज्वलितत्वमिव मनसः काचिदवस्था। या अवस्था वीररसे यथा वर्तते ततः अधिकतरत्वेन बीभत्से, ततोपि अधिकतरत्वेन रौद्रे रसे वर्तते। "सूर्य्यकिरणसंस्पर्शेन सूर्य्यकान्तमणिसमावेषविषयासंगेन द्रुति विरोधिनी काचित् मनोभावना दीप्तिरिति" चक्रवर्तिनः वदन्ति।

व्यञ्जकवर्णाः—

"योग आद्यतृतीयाभ्यां अन्त्ययोः रेणतुल्ययोः
टादिः शषौ वृत्तिदैर्घ्यं गुम्फं उद्धत ओजसि।"

यत्र वर्गस्य आद्यवर्णाः (कचटतपाः) तृतीयवर्णाः (गजडदवाः) तद् वर्गस्यान्त्यवर्णैः साकं (कचटतपाः खछठथफैः साकं, तथा गजडदवाः घझढधभैः साकं मिलिताः भवन्ति रेफाकारेण (रेण) यत्र रकारः वर्तते तथा दीर्घसमासः विद्यते तत्र श्लोक श्रवणमात्रेण मनसि दीप्तिरुदेति। अतः ओजोगुणः भवति। यथा—

"मूर्धामुद्वृत्तकृत्ताविरलगलगलद्रक्त संसक्त धारा—
धौतेशाङ्घ्रिप्रसादोपनत जयजगत् जातमिथ्या महिम्नाम्।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत् फलमिहनगरी रक्षणे यत् प्रयासः।"

अत्र मूर्धा, उत्सर्पि, दर्प, इति स्थलेषु उपरि रेफाकारेण रकार योगः। गलद्रक्त, अङ्घ्रि, प्रसाद, इति स्थलेषु अधोभागे रकारस्य योगः। उद्वृत्त, कृत्त, इति स्थाने तकारयोर्योगः। समासस्य सुदीर्घता अपि अस्ति। रावणस्य वीरोक्तिपूर्णशब्दयुक्तस्य श्लोकस्यास्य श्रवणेन मनसि दीप्तभावः जायते। अतः ओजोगुणः।

प्रसादस्य लक्षणम्—

"शुष्केन्धनाग्निवत् स्वच्छ जलवत् सहसैव यः
व्याप्नोत्यन्यत् प्रसादोसौ सर्वत्र विहितस्थितिः।"

यथा अग्निः झटिति शुष्के इन्धने व्याप्नोति। परिष्कारं वस्त्रं यथा जलं हठात् प्रसरति, तथा यः गुणः चित्तं आप्नोति सः सर्वसाधारणः रसस्थितिः प्रसादाख्यो गुणः।

व्यञ्जकवर्णाः—

"श्रुतिमात्रेण शब्दात्तु येनार्थ प्रत्ययोभवेत्
साधारणः समग्राणां स प्रसादो गुणः मतः।

श्रवणमात्रेण येन शब्देन अविलम्बं अर्थप्रतीतिर्भवति। सः प्रसादः गुणः। अयं गुणः सर्वसाधारणः। अर्थात् सर्वासु रचनासु सर्वेषु समासेषु अयं गुणस्तिष्ठेत्। यथा—

"परिम्लानं पीनस्तनजघन संगादुभयत—
स्तनोर्मध्यस्यान्तः परिमिलनयप्राप्य हरितम्।
इदं व्यस्तन्यासं श्लथ भुजलताक्षेप वलनैः-
कृशाङ्ग्याः सन्तापं वदति विशिनी पत्र शयनम्"

अत्र कविना इत्थमेव रचना समुपन्यस्ता येन श्रवणमात्रेण श्लोकार्थः हठात् पाठकानां पुरतोभाति। अस्मादत्र प्रसादगुणः इति मन्तव्यम्।

वामनमम्मटयोर्गुण विवेचने मम्मटस्य गुणपक्षपातिनी युक्तिः सुग्राह्या भवति। आलङ्कारिकनिष्णातैः नवरसाः स्वीकृताः। तत्तत् रसास्वादन काले सामाजिकानां मनसि तिस्रः अवस्थाः

जायन्ते द्रुतिदीप्तिविकासत्वेन । शृङ्गारकरुणशान्तेभ्यः मनसः द्रुतिर्जायते । वीररौद्रवीभत्सेभ्येः मनसः दीप्तिर्जायते । हास्याद्भुत-भयानकेभ्यः मनसः विकासोजायते । एतदवस्थानुसारं माधुर्य्यौजः प्रसादाख्याः गुणाः संभवेयुः इति मम्मटस्य गुणपक्षपातिनी युक्तिः साधीयसी ।

## शब्दालङ्काराः

**प्रश्नः ४३— मम्मटस्य शब्दालङ्काराणां नामान्युल्लिख्य अनुप्रासस्य भेदान् उदाहरणैः दर्शयत ।**

उत्तरम्— इतः प्रागेव शब्दार्थालङ्कारविषये आलङ्कारिकाणां मतान्तरं दत्तम् । परन्तु मम्मटः काव्ये उभयोः तुल्य प्राधान्यं स्वीकरोति । काव्यलक्षणकरणावसरे तेन शब्दार्थौ काव्यमिति व्यरचि । मम्मटस्य मतेन शब्दालङ्काराणां संख्या षट् । यथा— १- वक्रोक्तिः, २- अनुप्रासः, ३- यमकम्, ४- श्लेषः, ५- चित्रम्, ६- पुनरुक्त वदाभासः ।

अनुप्रासस्य लक्षणम्— "वर्णसाम्यमनुप्रासः" । यत्र अव्यव-धानेन वर्णानां समतावर्तते तत्रानुप्रासः । अनुप्रासः वर्णगत शब्दगतत्वेन द्विविधः । वर्णानुप्रासः च्छेकवृत्तिगतत्वेन द्विविधः ।

च्छेकानुप्रासः— "सोनेकस्य सकृत्पूर्वः ।" अनेक व्यञ्जन वर्णस्य यत्र एकवारमात्रं साम्यं भवति तत्र च्छेकानुप्रासः । च्छेकः, पण्डितः, तत्प्रियत्वेन च्छेकानुप्रासः ।

उदाहरणम्—

"ततोऽरुण परिस्पन्द मन्दीकृतवपुः शशी
दध्रे कामपरिक्षाम कामिनी गण्डपाण्डुताम्"

श्लोकेऽस्मिन् "स्पन्दमन्दीकृत" इतिस्थले नकारदकारयोः तथा "गण्डपाण्डु" इत्ति स्थले णकार डकारयोः सकृत् साम्यम् । अतः च्छेकानुप्रासः ।

वृत्त्यनुप्रासः— लक्षणम्- "एकस्याप्यसकृत् परः" यत्र एकस्य अनेकस्य वा व्यञ्जन वर्णस्य वारम्वारं साम्यं भवति तत्र वृत्त्यनुप्रासः । वृत्त्यनुप्रासे अस्मिन् माधुर्य्यव्यञ्जकवर्णैः रचिता उपनागरिका वृत्तिः, ओजोव्यञ्जकवर्णैः परुषा वृत्तिः प्रसादव्यञ्जकवर्णैः कोमलावृत्तिरन्तर्गता भवति । उपनागरिकायाः उदाहरणे "अनङ्गरङ्गप्रतिमं तदङ्गमिति" माधुर्य्यगुणस्योदाहरणं परुषायाः उदाहरणे "मूर्ध्नामुद्वृत्तकृत्त" इति ओजोगुणस्य उदाहरणं तथा कोमलायाः उदाहरणे—

"अपसारय घनसारं कुरुहारं दूर एव किं कमलैः
अलमलमालि ! मृणालैरिति वदति दिवानिशं वाला" इति

संगच्छते । एषु उदाहरणेषु सर्वत्र अनेक व्यञ्जक वर्णस्य वारम्बारं साम्यं भवति । अतः वृत्त्यनुप्रासस्य उदाहरणे युक्तत्वमेतेषाम् ।

लाटानुप्रासः— अनुप्रासस्य शब्दगतत्वेन यः भेदः अस्ति । सः लाटानुप्रास इति ख्याप्यते ।

लाटानुप्रासस्यलक्षणम्- "शाब्दस्तु लाटानुप्रासः भेदे तात्पर्य्यमात्रतः" भिन्न तात्पर्य्ययुक्ततुल्यार्थक शब्दानां यत्र समता विद्यते तत्र लाटानुप्रासः ।

यथा—

"यस्य न सविधेदयिता दबदहनस्तुहिन दीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिन दीधितिस्तस्य ।"

अत्र "सविधे दयिता" इति अनेक पदानां तात्पर्य्यमात्र भेदेन आवृत्ति-योगात् लाटानुप्रासः । अत्रापि "दवदहनस्तुहिनदीधितिः" इति स्थले पूर्वार्धे तुहिनदीधितौ दवदहनत्वं तथा उत्तरार्धे दवदहने तुहिन दीधितित्व विधेयम् । येन उद्देश्य विधेययोः परिवर्तनेन अन्वय भेदात् तात्पर्य्य भेदः संभवेत् ।

आदौ अयं शाब्दानुप्रासः पदगतनामगतत्वेन द्विविधः । पदगतः अपि अनेकपदगतत्वेन द्विविधः । नामगतश्च – समासासमासगतत्वेन, एकसमासगतत्वेन, विभिन्न समासगतत्वेन त्रिविधः । साकल्येन लाटानुप्रासः इत्थं पञ्चधा । पदगत भेदस्य अनेक पदगतस्य उदाहरणे "यस्य न सविधे दयिता" इति वोध्यम् । एकपदगतत्वेन यदुक्तम् तस्य उदाहरणे—

"वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।
सुधाकरः क्वनु पुनः कलङ्कविकलोभवेत् ।"

अत्र एकस्यैव सुधाकरपदस्य तात्पर्य्यतः भेदयोगात् एकपदगतलाटानु-प्रासः प्रथमसुधाकरपदं विधेयत्वेन विवक्षितं वर्तते । द्वितीय सुधाकर पदं उद्देश्यगतत्वेन वर्तते । अतः तात्पर्य्य भेदः ।

नामगतत्वेन लाटानुप्रासस्य यः भेदः सः एकसमासगतत्वेन भिन्नसमासगतत्वेन समासासमासगतत्वेन त्रिविधः । एकस्मिन् उदाहरणे भेदत्रयं दिदर्शयिषुः ग्रन्थकारः प्रतिपादयति यत्—

"सितकर कर रुचिरविभा विभाकराकार धरणिधर कीर्त्तिः
पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य ।"

"सितकरकररुचिरविभा" इति स्थले "कर कर" द्वयोः एक एव समासः । "विभा, विभा" इति द्वयोः भिन्नः समासः । यथा सितकरस्य करवत्रुचिराविभा यस्याः सा सितकरकररुचिरविभा । हे विभाकराकार ! । अतः विभा विभा द्वयोः भिन्न समासः । "कमला कमला" इति स्थले पूर्वस्य कमलापदस्य पौरुषेण सह समासः द्वितीयस्य कमला पदस्य असमासः । अतः समासासत्वेन उदाहरणमिदम् । प्रकारेणानेन लाटानुप्रासस्य पञ्चभेदाः दर्शिताः । अपिच अनुप्रासस्य भेदा दर्शिताः ।

**प्रश्नः ४४- यमकस्य लक्षणं विलिख्य भेदान् दर्शयित्वा उदाहरणमुखेन एकस्य संयोजनं विधेयम् ।**

उत्तरम्— यमौ, समजातौ । यथा समकालमेव उत्पन्नयोः कुमारयोः आकृतिः समाजायते । परन्तु उभयोर्मध्ये महान् भेदोऽवतिष्ठते । तथा भिन्नार्थयुक्तयोः (अर्थरहितयोर्वा) पदानां एकत्रावस्थानेन यमकालङ्कारः भवति । उक्तञ्च—

"अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः", यमकम् अर्थात् अर्थे विद्यमाने अविद्यमाने वा भिन्नार्थयुक्त वर्णानां यत्र तेन एव क्रमेण आवृत्तिर्जायते तत्रायमलङ्कारः ।

आदौ यमकालङ्करः पादगतः, पादांशगतः इति द्विविधः ।

पादगत यमकालङ्कारः एकादशभेदयुक्तः । यथा—

१- यदि प्रथमपादः द्वितीयपादे न यम्यते तर्हि "मुखं" नाम यमकालङ्कारः ।

२- यदि प्रथमपादः तृतीयपादे रच्यते तर्हि "संदंशो' नाम यमकालङ्कारः ।

३- यदि प्रथमपादः चतुर्थपादे रच्यते तर्हि आवृत्तिनामा यमकालङ्कारः ।

४- यदि द्वितीयपादः तृतीयेपादे रच्यते तर्हि गर्भोनाम यमकालङ्कारः ।

५- यदि द्वितीयपादः चतुर्थपादे यम्यते तर्हि संदष्टकं इति यमकालङ्कारः ।

६- यदि तृतीयपादः चतुर्थपादे यम्यते तर्हि पुच्छं नाम यमकालङ्कारः ।

७- यदि प्रथमपादः सर्वत्र द्वितीयतृतीय चतुर्थपादेषु यम्यते तर्हि पङ्क्तिरिति यमकम् ।

८-यदि प्रथयपादः द्वितीय पादे तृतीयपादः चतुर्थपादे यम्यते तर्हि मुखपुच्छयोः ऐक्ययोगेन युग्मकमिति यमकालङ्कारः ।

९- यदि प्रथमपादः चतुर्थे द्वितीयपादः तृतीये पादे यम्यते तर्हि आवृत्तिगर्भयोः ऐक्ययोगात् परिवृत्तिनामा यमकालङ्कारः ।

१०- यत्र तु संदंशसंदष्टकयोः मिश्रणात् संकरः भवति तत्र अर्धावृत्तियोगात् समुद्गोनाम यमकामङ्कारः ।

११- यत्र तु श्लोकावृत्तिर्भवति (प्रथमद्वितीयपादौ क्रमशः तृतीय-चतुर्थपादस्थाने रच्यते)

तत्र महायमकालङ्कारः भवति । इत्थं पादगत यमकस्य एकादशभेदाः । पादभागवृत्तित्वेनापि अस्य यमकस्य अनेके भेदाः सम्भवन्ति । अत्र केवलं प्रथमपादस्य तृतीयपादेन साकं यमनेन कथं संदंशनामकं यमकं भवति तदुदाह्रियते । यथा—

"सन्नारीभरणोमायमाराध्य विधुशेखरम्
सन्नारीभरणोमायः ततः त्वं पृथिवीं जय ।"

अत्र "सन्नारीभरणोमायम्" इति तृतीयपादेऽपि व्यवह्रियते। उभयत्र समानाः वर्णाः सन्ति । परन्तु उभयोर्मध्ये अर्थभेदः चकास्ति । प्रथमेपादेस्थितस्य "सन्नारीभरणोमायं" इत्यस्य अर्थः भवति— "सतीर्नारीर्धारयतीति सन्नारीभरणा, अथवा सतीनारीणामाभरण-तुल्या या उमा तां याति, पत्नीरूपेण स्वीकरोति यः तं शिवम्" इति। द्वितीयपादेस्थितस्य तस्यैव अर्थः भवति— "सन्नाः, अवसादं गताः ये अरीणामिभाः यत्र तथाभूतः रणः यस्य सः, अपिच अमायः कपटरहितः सन्। अतः अत्र संदंशनामकं यमकम् । एवमप अन्येषु स्थलेषु तर्क्यम् ।

**प्रश्नः ४५- शब्दश्लेषस्य लक्षणं अभिधाय तस्यभेदान् उदाहरणेषु दर्शयत ।**

उत्तरम्— "वाच्यभेदेन भिन्ना यत् युगपद् भाषण स्पृशः
श्लिष्यन्ति शब्दाः श्लेषोऽसौ, अक्षरादिभिरष्टधा"

अर्थद्वयस्य समकक्षतया वाच्यत्वे श्लेषालङ्कारः भवति । अत्र श्लेषे शब्दाः एकप्रयत्नगतत्वेन उच्चारिता भवन्ति । अयं श्लेषः अष्टधा । यथा—

१- वर्णश्लेषः, २- पदश्लेषः, ३- लिंगश्लेषः, ४- भाषाश्लेषः, ५- प्रकृतिश्लेषः, ६- प्रत्ययश्लेषः, ७- विभक्तिश्लेषः, ८- वचनश्लेषः ।

१. वर्णश्लेषः—

"अलङ्कारः शङ्काकरनरकपालं परिजनो—
विशीर्णाङ्गो भृङ्गो वसु च वृष एको बहुवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामर गुरो—
विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ।"

अत्र विधु विधिशब्दयोः सप्तम्येकवचने "विधौ" इति तुल्यरूपम् । अतः वर्णश्लेषः ।

२- पदश्लेषः—

"पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत् करेणु गहनं संप्रति सममावयोः सदनम्"

राजरूपे अयमर्थः भवति— पृथूनि, (विशालानि) कार्तस्वर पात्राणि (स्वर्णपात्राणि) यत्र तत पृथुकार्तस्वर पात्रम् । दरिद्ररूपे अयमर्थः भवति— पृथुकानां (बालानां) क्षुधायोगात् । आर्तस्वरस्य पात्रं (स्थानं) यत् तत् पृथुकार्तस्वर पात्रम् । समास घटकत्वेन अत्र पदानां श्लिष्टत्वात् पदश्लेषः ।

३– लिङ्गश्लेषः—

"भक्तिप्रह्व विलोकन प्रणयिनी नीलोत्पलस्पर्धिनी ।
ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ।।

अस्मिन् श्लोके प्रणयिनी-नीलोत्पलस्पर्धिनीत्यादिनि यानि यानि पदानि सन्ति तानि क्लीवलिङ्ग स्त्रीलिङ्गयोस्तथा एकबचन द्विवचनयोस्तुल्यरूपाणि । यथा—

नेत्रपक्षे— भक्तियोगात् ये प्रह्वाः नम्राः तेषां विलोकने प्रणयः ययोः ते भक्ति प्रह्वविलोकन प्रणयिनी । नेत्रे इत्यर्थः ।

तनुपक्षे—भक्ति प्रह्वानां विलोकने प्रणयः यस्यां सा तनुरित्यर्थः । नेत्रपक्षे अर्थकरणात् क्लीवलिङ्गं तथा शरीर पक्षे अर्थ करणात् स्त्रीलिङ्गं भवति । अतः उभयोः मिश्रणात् अत्र लिङ्गश्लेषः ।

४· भाषाश्लेषः–

"महदे सुरसंधमे तमवसमासङ्ग मागमाहरणे
हरवहुसरणं तं चित्तमोहमवसर उमे सहसा" ।

अत्र श्लोके "सहसा" इति पद विहाय अन्यत्र सर्वत्र संस्कृत प्राकृतयोः श्लेषः भवति । अतः भाषाश्लेषः ।

५– प्रकृतिश्लेषः—

"अयं सर्वाणि शास्त्राणि हृदिज्ञेषु च वक्ष्यति
सामर्थ्य कृदमित्राणां मित्राणाञ्च नृपात्मजः ।"

उदाहृते पद्ये "वक्ष्यतीति" स्थले वहिवच्च्योः लृट् लकारे तुल्यंरूपम्
पुनः सामथ्यं कृन्ततीति करोतीत्यर्थे "सामर्थ्यकृत्" इति सिद्धं भवति।
"कृन्ततिकरोत्योः" क्विप् प्रत्यये तुल्यंरूपम्। अतः प्रकृतिश्लेषः।

६- प्रत्ययश्लेषः—

"रजनिरमणमौलेः पादपद्मावलोक-
क्षणसमय परात्पा पूर्वसंपद् सहस्रम्।
प्रमथनिवहमध्ये जातुचित् त्वत् प्रसादा—
दहमुचितरुचिः स्यान्नन्दिता ता तथा मे।"

अत्र "स्यान्नन्दिता" इति स्थले स्यात् स्याम् इति प्रथमपुरुषोत्तम-
पुरुषयो स्तुल्यरूपम्। पृथगनुक्तत्वात् प्रत्ययश्लेषान्तर्गतत्वं वर्तते।
अपिच "नन्दिता" इति स्थाने नन्दिनः भावः इति योगात् नन्दी+
तल् = नन्दिता, अपिच नन्द्+तृच् = नन्दिता इति योगात् तद्धित
कृदन्तयः प्रत्यययोः श्लेषः।

७- विभक्तिश्लेषः—

"सर्वस्वं हर सर्वस्य त्वं भव च्छेदतत्परः।
नयोपकार सांमुख्य मायासि तनुवर्तनम्।"

उदाहृते पद्ये "हर" इति पदं क्वचित् सुवन्तार्थे क्वचित् तिङन्तार्थे
व्यवहृतं भवति। अपिच "भव" इति पदमपि कुत्रचित् सुवन्तार्थे
सम्बोधनत्वेन कुत्रचित् तिङन्तार्थे लोट् लकारार्थत्वेन व्यवहृतं भवति।
अतः सुवन्ततिङन्त विभक्तित्वेन विभक्तिश्लेषः।

८- वचनश्लेषः— "भक्तिप्रह्वविलोकनप्रणयिनी..." इति लिङ्ग-श्लेषस्य उदाहरणे दत्तम। अत्र यदा स्त्रीलिङ्गे रूपं भवति तदा "भक्तिप्रह्वविलोकनप्रणयिनी" इति एकवचनं भवति यदा नेत्रपक्षे क्लीबलिंगे रूपं भवति तदा द्विवचनं "भक्तिप्रह्वविलोकन प्रणयिनी" इति भवति। अतः अत्र वचनश्लेषः।

**प्रश्नः ४६- श्लेषस्य शब्दार्थालङ्कारविषये वादिप्रतिवादि मतं दर्शनीयम्।**

उत्तरम्— श्लेषस्य लक्षण इतः प्रागेव दर्शितम्। श्लेषालङ्कारस्य सभङ्गाभङ्गत्वेन भेदद्वयमस्ति। केचिन्निगदन्ति श्लेषस्य सभङ्गाभङ्ग-त्वेन यद् भेदद्वयमस्ति, तत्र सभङ्गस्य शब्द श्लेषत्वम्। यतः स्वरि-तादि स्वरभेदात् भिन्नप्रयत्न-उच्चार्य्यतया भिन्नभिन्न शब्दानां भिन्न समासात् जतुकाष्ठन्यायेन श्लिष्टत्वम्। यथा— "पृथुकार्तस्वरपात्रम्" अत्र पक्षे पृथुकानां, बालकानां आर्तस्वरस्य पात्रं स्थानम्। अपरपक्षे पृथूनि कार्तस्वर पात्राणि यत्र तत् इति भिन्न समासत्वेन पदभङ्गात् सभङ्गश्लेषः।

यत्र तु स्वरितादि गुणस्य अभेदात् एकप्रयत्नोच्चार्य्यतया शब्दभेदाभावात् (समासाभावात्) एकवृन्तगत फलद्वयन्यायमधिकृत्य शब्दयोः श्लेषः भवति, तत्र अभङ्ग श्लेषः। (अर्थश्लेषः) यथा—

"योऽसकृत् परगोत्राणां पक्षच्छेदक्षणक्षमः
शतकोटि दत्तां विभ्रद विबुधेन्द्रः स राजते"।

अत्र श्लोके भिन्न समासाभावेन स्वरितादि स्वराभेदात् कप्रत्न-उच्चार्य्यतया न शब्दानां भेदः। किन्तु अर्थभेदः। यद्यपि "यावन्तः अर्थाः तावन्तः शब्दाः" इति नयेन अत्र अर्थभेदेन द्वौ शब्दौ स्तः। तथापि उपपत्त्या शब्दभेदज्ञानेऽपि तत्पूर्वं ऐक्ययोगात् न शब्दयोर्भेदः। अतः शब्दयोरभङ्गयोगेन अत्र अभङ्गालङ्कारः। अर्थात् अयमभङ्गश्लेषः अर्थश्लेषः।

मम्मटः प्रतिवादिस्थानमलंकुर्वन् एतन्नस्वीकृत्य स्वाभिमतप्रदान व्याजेन पृच्छति— भवद्भिर्यत् स्वीक्रियते— एकप्रयत्नोच्चार्य्यतया "विधौ" इति स्थाने श्लेषयोगात् भिन्नार्थं प्रकाशयतः "विधौ" इति पदस्य शब्दालङ्कारत्वम्। यतः शब्दालङ्कार उदाहरण प्रसङ्ग दत्तमेतत्। अत्र कथं अर्थालङ्कार प्रस्तावे शब्दालङ्कार नयः उत्थाप्यते। भवतां वचनमेव भवतां विरोधि भवति। अतः तन्नचतुरस्रम्। अस्माकं मते तु यत्र शब्दानां परिवृत्तिसहत्वं तत्रार्थालङ्कारत्वम्, यत्र असहत्वं तत्र शब्दालङ्कारत्वम् श्लेषस्य भवेत्। यथा-

"स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्
अहो सु सदृशी वृत्तिस्तुला कोटेः खलस्य च"

अत्र स्तोक शब्देन विना अल्पादिशब्दप्रयोगेऽपि न श्लेष खण्डना जायते। अस्मादत्र अर्थश्लेषः। यत्र तु शब्दपरिवर्तनेन श्लेषः न भवति तत्र शब्दश्लेषः। यथा- पृथुकार्तस्वरपात्रमिति। यदि पृथुकस्थाने बालकपदं स्थाप्यते तर्हि न श्लेषः सम्भवेत्। अत्र शब्द-परिवर्तनासहत्वेन शब्दश्लेषः। वादिभिः यदुक्तं सभङ्गश्लेषः शब्दश्लेषः अभङ्गश्लेषः अर्थश्लेषः इति तत् कामं दूषयित्वा मम्मटः प्रतिपादयति

शब्दश्लेषार्थश्लेषविषये अस्मद्प्रतिपादितं शब्दपरिवर्तनासहसत्वमेव साधीयः ।

**प्रश्नः ४७— वक्रोक्तिपुनरुक्तवदाभासचित्रालङ्काराणां लक्षणानि लक्ष्ये योजयत ।**

उत्तरम्— बक्रोक्ति— मम्मटस्वीकृतशब्दालङ्कारेषु एते अलङ्काराः अन्यतमाः । न केवलं शब्दालङ्कारेषु अपि च सर्वेषु शब्दार्थालङ्कारेषु वक्रोक्तिरेव मुख्या । प्रत्यक्षरमेव सत्येयमुक्तिर्यत्—

"सैषा सर्वत्र वक्रोक्तिरनयार्थोविभाव्यते ।
यत्नोऽस्यां कविना कार्य्यः कोऽलङ्कारोऽनयाविना"

लक्षणम्—

"यदुक्तमन्यथा वाक्यमन्यथा योजयेत् यदि
अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततोद्विधा ।"

यदि एकस्य वचनं अन्यः कश्चित् अर्थान्तरमवबोध्य अन्यथा योजयति तर्हि तत्र वक्रोक्तिर्जाता । (वक्रा + उक्तिः) इयं श्लेषमूलिका काकूमूलिका चेति द्विधा ।

श्लेषमूलिकावक्रोक्तिः—(सभङ्गश्लेषस्य)

"नारीणामनुकूलमाचरसि चेत् जानासि कश्चेतनो
वामानां प्रियमादधाति हितकृत्नैवाबलानां भवान् ।
युक्तं किं हितकर्तनं ननुबलाभावप्रसिद्धात्मनः
सामर्थ्यं भवतः पुरन्दर मतच्छेदं विधातुं कुतः ।"

अत्र पद्ये कश्चित् वदति— यदि नारीणां अनुकूलं, अनुगुणमाचरसि तर्हि त्वं 'विज्ञोऽसि। अपरः एतद्वचनं निशम्य प्रकारान्तरेण अर्थं करोति— कः चेतनः (विज्ञः) वामानां, शत्रूणां प्रियमादधाति ? अर्थात् प्रथमवक्तृवचनं स्त्री पक्षे न बुध्वा अपरेण बुद्धं यत् अरीणां यदि अनुकूलं नाचरसि तर्हि विज्ञोऽसि। अतः द्वितीयः उत्तरं ददाति कः शत्रु-उपकारं विधास्यतीति। अतः अत्र वक्रोक्तिः इयं वक्रोक्तिः पदभङ्ग योगात् सभङ्गश्लेषमूलिका।

अभङ्गश्लेषमूलिका—

"अहोकेनेदृशीबुद्धिर्दारुणा तवनिर्मिता
त्रिगुणाश्रूयते बुद्धिर्नतु दारुमयी क्वचित्"

कश्चित् वदति— अहो! निष्ठुरबुद्धिशालिन्! तव बुद्धिः केन दारुणा (कष्टदायिनी) कृता। एतत् श्रोता अर्थान्तरेण बुध्वा उत्तरयति सत्वरजस्तमोभेदेन बुद्धिः त्रिप्रकारा श्रूयते नतु क्वचित् दारुमयी (काष्ठमयी) श्रूयते। अत्र दारुशब्दस्य तृतीया एकवचने तथा दारुण शब्दस्य स्त्रीलिङ्गे प्रथमा एकवचने दारुणा भवति। वक्ता स्त्रीलिङ्ग-मुद्दिश्य यदा आदौ "दारुणाबुद्धिः" इति कथयति तदा श्रोता हठात् अर्थान्तरद्वारा दारुशब्दस्य तृतीया एकवचनं बुध्वा बुद्धिः न दारुमयीति प्रतिपादयितुं बुद्धेः प्रकारत्रयमुपदिशति। अतः अत्र अभङ्गश्लेषमूलिका वक्रोक्तिः।

काकुमूलिका—

"भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते"

६- प्रतिकूल विभावादिग्रहः—

प्रकृत रसस्य यः विरुद्धः रसः यदि तस्य विभावानुभावव्यभिचारि भावानां ग्रहणं भवति तर्हि तत्र प्रकृत रसमालिन्यात् अस्य दोषस्यावकाशः भवति। यथा—

"प्रसादे वर्तस्व प्रकटयमुदंसंत्यजरुषं
प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिंचतु वचः।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे! प्रत्येतुं प्रभवति गतः कालहरिणः"

अत्र श्लोके वस्तुतः शृङ्गार रसः वर्तते। शान्तरसः शृङ्गारस्य विरोधी। शृङ्गार रसवर्णना प्रसङ्गे कविना चतुर्थपादे "नमुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः" इति यत् व्यवहृतं तेन शान्तरसस्य स्थायिभावः निर्वेदः प्रकाशितोभवति। एतेनापि शान्तस्य विभावानुभावादीनां ग्रहणं भवति। अतः दोषः।

७- पुनःपुनर्दीप्तिः— काव्ये अङ्गत्वेन विवक्षितस्य रसस्य वारम्वारं यदि परिप्रकाशः भवति, तर्हि अस्यदोषस्यापतनं भवति। अङ्गिरसस्य भृशं वर्णनात् न दोषः। महाभारतादौ अङ्गिनः शान्तस्य भृशं प्रयोगेऽपि न वैरस्यं जायते सहृदयानाम्। कुमारसम्भवे मदनदाहानन्तरं रतिदेव्याः क्रन्दनस्य पुनः पुनः वर्णनात् अस्य दोषस्यागमनं भवति।

८- अकाण्डे प्रथनता—

अकाण्डे, असमये प्रथनं, रसविस्तारः यत्र तत्र अयं दोषः भवति। यथा वेणीसंहारे अनेकेषां वीराणां युद्धाय ताडितडिण्डिमानां स्वपक्षीयानां विनाशकाले भानुमत्या सह सम्भोग वर्णनम् । तस्मिन् काले दुर्योधने वीररसवर्णनं समीचीनं भवेत् । परन्तु तद्विहाय शृङ्गारवर्णनात् अकाण्डे प्रथनता दोषः।

९ अकाण्डे च्छेदता— यत्र असमये रसस्य विच्छेदः भवति तत्र अयं दोषोभवति । यथा— वीरचरित नाटके श्रीरामपरशुरामयोः युद्धेसन्निकटे (वीर रसस्य आसन्नत्वात्) वीररसवर्णनं विहाय विवाहानन्तरं कंकणमोचनाय गच्छामीति राघवस्य उक्तिवर्णनं रसच्छेदकं भवति । येन रामस्य भीरुता प्रकटिता भवति । अतः दोषः ।

१०- अङ्गस्यातिविस्तृतिता— यत्र अङ्गस्य अप्रधानस्य प्रतिनायकादेः वर्णनं अत्यन्ततया भवति तत्र अयं दोषोभवति । यथा- हयग्रीवबधाख्ये नाटके नायकः विष्णुः। प्रतिनायकः हयग्रीवः । तत् प्रतिनायकस्य हयग्रीवस्य जलक्रीडावनविहाररतोत्सवादीनां यथा वर्णनं भवति. न तथा नायकस्य कृष्णस्य। परन्तु तत्र नायकस्य एतद् वर्णना अधिकतरी भवेत् । एतदभावात् दोषः ।

११-अङ्गिनोऽननुसंधानम्- यत्र प्रधान नायकस्य नायिकाया वा अननुसंधानं, (विस्मरणम्) भवति तत्र अयं दोषोभवति । यथा—




एवमपि मुरजवन्धे पद्मवन्धे च भवति ।

# अर्थालाङ्काराः

## प्रश्नः ४८– उपमालङ्कारस्य लक्षणमभिधाय पूर्णोपमायाः षड् भेदान् दर्शयत ।

उत्तरम्— अर्थालङ्कारेषु मम्मटेन उपमालङ्कारः आद्यत्वेन स्वीकृतः । एतद लक्षणप्रसङ्गे तेन निरणायि यत्—

"साधर्म्यमुपमा भेदे"

अर्थात् यत्र उपमानोपमेययोः विद्यमानत्वेऽपि भेदे यदि उभयोः समानधर्मः वर्तते तर्हि तत्र उपमालङ्कारस्य प्रवृत्तिः । अनन्वयालङ्कारत् भेद प्रतिपादनार्थं उपमानोपमेययोर्भेदः कल्पितः । इयं पूर्णालुप्ता भेदेन द्विविधा । यत्र स्थले उपमानोपमेय- साधारणधर्म उपमा- प्रतिपादनाशब्दाः सन्ति तत्र पूर्णा । यत्र एतेषु उपादानेषु एकस्य- द्वयोस्त्रयाणां वा अनुपपत्तिः तत्र लुप्तोपमा भवति ।

पूर्णोपमा श्रौत्यार्थीभेदेन द्विविधा। यथा, इवादि पदानां प्रयोगे श्रौती पूर्णोपमा भवति। तुल्य सदृशादि प्रयोगे आर्थी पूर्णोपमा भवति। पुनश्च एतद्द्वयं वाक्यगतत्वेन, समास गतत्वेन, तद्धित गतत्वेन च षड्धा भवति।

१- वाक्यगत श्रौतीपूर्णोपमा—

"स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति
प्रभाव-प्रभवं कान्तं स्वाधीन पतिका यथा"

अत्र स्वाधीनपतिका उपमानम्, विजयश्रीरुपमेया, नमुञ्चतीति साधारणधर्म। यथा, उपमाप्रतिपादक: शब्द:। यथा पदेन हस्व समासाभावात्। अत्र वाक्यगत श्रौतीपूर्णोपमा।

२- वाक्यगत आर्थीपूर्णोपमा—

"चकित हरिणलोललोचनाया: क्रुधितरुणारुणतारहारिकान्ति
सरसिजमिदमाननञ्च तस्या: सममिति चेतसि समदं विधत्ते"

अत्र सरसिजमुपमानम्, आननमुपमेयम्। अरुणसदृशकान्तित्वं साधारणधर्म:। समशब्द: उपमाप्रतिपादक:। सम शब्दस्थापनात् तथा तेन सह समासाभावात् वाक्यगतार्थी पूर्णोपमा।

३- समासगता श्रौतीपूर्णोपमा—

"अत्यायतैर्नियमकारिभिरुद्धतानां
दिव्यै: प्रभाभिरनपायमयैरुपायै:
शौरीभुजैरिव चतुर्भिरद: सदा यो
लक्ष्मीविलास भवनैर्भुवनं बभार"।

अत्र भुजैरिति उपमानम् । उपायैरिति उपमेयम । आयतत्वादिः साधारणधर्म । इव शब्दः उपमाप्रतिपादकः । "इवेन समासः विभक्त्यलोपश्च" इत्यनुसारं इवेन साकं भुज शब्दस्य समासयोगात् समासगा इयं श्रौती पूर्णोपमा ।

४. समासगार्थीपूर्णोपमा—

"अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः

सुरतरु सदृशः स भवानभिलषणीयः क्षितीश्वरस्य न कस्य

अत्र सुरत रुरुपमानम् , भवान् उपमेयः । गरिमगीतश्रीः साधारणधर्मः । सदृशः इति उपमाप्रतिपादकः । सदृशशब्दोपादानात् तथा तेनैव पदेन साकं "सुरतरु" इत्यस्य समासयोगात् समासगा आर्थी पूर्णोपमा ।

५. तद्धितगाश्रौती पूर्णोपमा—

"गाम्भीर्य्य गरिमातस्य सत्यं गङ्गा भूजङ्गवत्"

अत्र "गङ्गा भुजङ्ग" उपमानम् "तस्य" इति उपमेयम् । "गाम्भीर्य्य गरिमा" साधारणधर्मः । भुजङ्गवदित्यत्र "तत्रतस्यैव" सूत्रेण षष्ठ्यन्तात् वत् प्रत्ययः । भुजङ्गशब्दात् तद्धिते इवार्थे वतेर्योगात् तद्धितगाश्रौती पूर्णोपमा ।

६- तद्धितगा आर्थी पूर्णोपमा—

"दुरालोकः स समरे निदाघाम्बर रत्नवत्"

अत्र "निदाघाम्बररत्नमु"पमानम् । "सः" उपमेयः । "दुरालोकः" साधारणधर्मः । अम्बर रत्नवदित्यत्र "तेनतुल्यं क्रिया चेद्वतिः" इति अनुसारं तृतीयान्तात वत् प्रत्ययः । अम्बररत्नशब्दात् तद्धिते तुल्यार्थे वत् प्रत्यय योगात् तद्धितगार्थी पूर्णोपमा भवति ।

प्रश्नः ४६– अनन्वयोपमेयोपमोत्प्रेक्षासंदेहानां लक्षणानि लक्ष्येयोजयत ।

उत्तरम्— १– अनन्वयः – लक्षणम्

"उपमानोपमेयत्वे, एकस्यैवैकवाक्यगे"

न विद्यते अन्वयः (सम्बन्धः) उपमानमन्तरेण यत्र सः अनन्वयः । अर्थात् यत्र एकस्मिन्वाक्ये उपमानं उपमेयत्वेन परिकल्प्यते तत्रास्यालङ्कारस्य अवकाशः । यथा—

"न केवलं भाति नितान्तकान्ति नितम्बिनी सैवनितम्बिनीव
यावद् विलासायुधलास्यवासा स्तेतद्विलासा इव तद्विलासाः"

अत्र श्लोके "नितम्बिनी नितम्बिनीव" "तद् विलासाः तद् विलासा इव" इति कथनात् उपमानरूपेण वर्तमानं "नितम्बिनी" पदं तथा "तद्विलासाः" पदं उपमेयत्वेन परिकल्पितम् । अतः अनन्वयः ।

२– उपमेयोपमा—

"विपर्य्यास उपमेयोपमातयोः"

यत्र वाक्यद्वये प्रागेव उपमानत्वेन परिगृहीतं पदं उपमेयत्वेन कल्प्यते तत्र उपमेयोपमाभवति । "तयोर्विपर्य्यासः" इत्यनेन उपमानोपमेययोः परिवर्तनम् । उपमानत्वेन कल्पितस्य पदस्य उपमेयत्वेन कल्पनमित्यर्थः । यथा—

"कमलेवमतिर्मतिरिव कमला तनुरिवविभा विभेवतनुः ।
धरणीवधृति धृ तिरिवधरणी सततं विभाति वत यस्य"

उदाहृतेऽग्रे कमलेवमतिरिति कथनात् "कमला" उपमानम्। मतिः उपमेया भवति। पुनः "मतिरिव कमला" इति कथनात् प्रथमतः उपमानत्वेन समासीनं "कमला" पदं उपमेय पदभाग् भवति। एवमपि धरणीबधृतिरितिस्थले वोद्धव्यम्। अतः अत्र उपमेयोपमा अलङ्कारः।

३- उत्प्रेक्षा—

"सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्"

यत्र कविकल्पितेन उपमानेन साकं (समेन) उपमेयस्य (प्रकृतस्य) सम्भावनं क्रियते तत्र उत्प्रेक्षालङ्कारः।

यथा—

"उन्मेषं यो मम न सहते जाति वैरी निशायां
इन्दोरिन्दीवरदलदृशा तस्य सौन्दर्य्य दर्पः।
नीतः शान्ति प्रसभमनया वक्त्रकान्त्येति हर्षात्
लग्नामन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः।"

नायिकायाः पादः स्वभावतः रक्तवर्णः। अयं रक्तवर्णः उपमेयः। कमल शोभा उपमानभूता। अत्र पद्मलक्ष्मीः किमु नायिका पादयोः आश्रिता इति सम्भावन करणात् उत्प्रेक्षा। यत्रापि क्रियापदेन सह इवस्य योजनं भवति तत्रापि क्रियोत्प्रेक्षा भवति। यथा— "लिम्पतीव तमोङ्गानि ..." अत्र लिम्पति क्रियया सह इवस्य योजनम्।

४- संदेहः—

"ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः।"

यत्र उपमानेन साकं उपमेयस्य सादृश्य योगात् संशयो जायते तत्र संदेहनामालङ्कारः। स च भेदोक्तौ, भेदानुक्तौ, इति द्विधा।

यथा— (भेदोक्तौ)-

"अयंमार्त्तण्डः किं स खलु तुरगैः सप्तभिरितः।
कृशानुः किं सर्वाः प्रसरनिदिशो नैषनियतम्।
कृतान्तः किं साक्षात् महिषवहनोऽसावितिचिरं
समालोक्याजौ वां विदधतिविकल्पान् प्रतिभटाः।"

युद्धक्षेत्रे पराक्रमशालिनं नरपतिमवलोक्य प्रतिपक्षिणः चिन्तयन्ति। अयं किमु मार्तण्डः? अयं किमु बह्निः? अयं किमु यमः? सर्वत्र राजा उपमेयः। मार्तण्डः, बह्निः यमश्च, उपमानः। उभयोर्मध्ये सादृश्यात् संदेहोभवति। राजा किमु सूर्य्यः, बह्निः, यमोवेति। अतः अत्र संदेहः।

अस्मिन् प्रथमभेदे निश्चयगर्भत्वनिश्चयान्तत्व संदेहः वर्तते। "अयं मार्तण्डः किं" इत्युदाहरणे निश्चयगर्भत्व संदेहः वर्तते। निश्चयः गर्भे (मध्ये) यस्य सः इति व्युत्पत्त्या, राज्ञि सूर्य्यत्वकल्पनानन्तरं सप्तघोटकवाहनाभावात् पुन तेजः साम्यात् कृशानुत्वकल्पनेन निश्चयगर्भः।

निश्चयान्तः यथा—

"इन्दुः किं क्व कलङ्कः सरसिजमेतत् किमम्बुकुत्रगतम्
ललितसविलासवचनैर्मुखमिति हरिणाक्षि निश्चितं परतः"

नयिकायाः मुखमालोक्य कस्यचित् नायकस्य उक्तिरियम्—हे हरिणाक्षि । इदं पुरोदृश्यमानं तव मुखं चन्द्रः किमु ? नहि नहि चन्द्रे कलङ्कोस्ति । परन्तु तव मुखे कलङ्काभावः । पुनः तर्कयति किमु कमलम् ? तर्हि जल क्व ? जलाभावात् न कमलम् तर्हि किम् ? ललितविलासवचनैः मुखमितितर्कयामि । अत्र मुखमवलोक्य किमिन्दुः, ? संदेहोदयानन्तरं मुखत्वेन निश्चयात् पुनः तत्परं संदेहस्यानुद्भूतनात् निश्चयान्तसन्देहालङ्कारः ।

भेदानुक्तौ—(शुद्धसंदेहः)

"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रोनुकान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासोन पुष्पाकरः ।
वेदाभ्यास जडः कथंनु विषय व्यावृत्त कौतूहलो—
निर्मातु प्रभवेन्मनोहरमिदं रूपं पुराणोमुनिः ।"

नायिका शरीरगठने प्रजापतिः लग्नः आसीत् आहोस्वित् मदनः, वा चन्द्रः इति संदेहाविर्भावात् संदेहः । अन्तिमे प्रजापतेः वेदाभ्यास-निरतत्वात् अस्याः सुन्दर रूपस्य निर्माणे संपूर्णाक्षमत्वं प्रकाश्यते । अवशिष्टयोः मदनचन्द्रयोः कतरः निर्माणकारी इति संदेहः निश्चय-मध्यत्वनिश्चयान्तत्वभ्यां विभिन्न इति शुद्धसंदेहालङ्कारः । रूपके उपमानोपमेययोः अभेदयोगात् तत्वावधारणम् । उत्प्रेक्षायां उपमान कोटिक संशयः, अत्र संदेहे उपमानोपमेययोः समकोटिकः संदेहः इति भेदः ।

**प्रश्नः ४६- रूपकस्य लक्षणमुल्लिख्य तद्भेदान् प्रतिपाद्य उदाहरण द्वारा दर्शयत ?**

उत्तरम्— लक्षणम्—

"तद्रूपकमभेदो य उपमानोपमेययोः ।"

यत्र उपमानोपमेययोः अभेदबुद्धिर्यायते तत्र रूपकालङ्कारः भवति । अपह्नुत्यलङ्कारे उपमेय गोपनेन भेदस्य गोपनं अत्रतु भेदस्यागोपनमिति भेदः ।

रूपकालङ्कारः त्रिविधः । "साङ्गनिरङ्गपरम्परितत्वेन" । साङ्गरूपकं समस्तवस्तुविषय–एकदेशविवर्तित्वेन द्विविधम् ।

साङ्गस्य— समस्तवस्तुविषयम्—

"समस्तवस्तुविषयं श्रोता आरोपिता यदा"

मधुमतीकारैःविभट्टाचार्यैरुक्तम्— "अङ्गमारोपकारणम्" तेनसाकं वर्तते इति साङ्गम् । यदा आरोप्यमाणाः सर्वे शब्देन उच्च्यन्ते तदा साङ्गरूपकस्य समस्त वस्तुविषय भेदः भवति । यथा—

"ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी—
न्यन्तर्धान व्यसन रसिका रात्रिकापालिकीयम् ।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जन परिमलं लांछनस्य च्छलेन ।"

अत्र श्लोके रात्रौ कापालिकीत्वारोपेणं ज्योत्सायां भस्मनः तारकासु अस्थिसमूहानां चन्द्रे कपालस्य चारोपणं भवति । एतेषामारोप्यमाणानां सर्वत्र शब्दोपात्तयोगेन अत्र समस्तवस्तुविषयरूपकालङ्कारः ।

एकदेशविवर्तिरूपकम्—

"श्रौता आर्थाश्चते यस्मिन्नेकदेशविवर्तितत्"

यत्र एकदेशे आरोप्यमाणः शब्दोपात्तः भवति, अन्यत्र पूर्वारोपवलात् आरोप्यमाणाः अर्थोपात्ता भवन्ति तत्र एकदेशे रूपकस्य विवर्तनात् एकदेशविवर्तिरूपकम् भवति। यथा—

"स्यथ रणान्तःपुरे करे कुर्वतोमण्डलाग्रलताम्।
रस संमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना।"

अत्र श्लोके रणे अन्तःपुरस्यारोपणं शब्दोपात्तम्। मण्डलाग्रे नायिकायाः रिपुसेनायां प्रतिनायिकाया आरोपणं न शब्दोपात्तम्। परन्तु रणे अन्तःपुरस्य आरोपवलात् अस्मिन् अर्थवशेन (मण्डलाग्रे नायिकायाः) स्वतः आरोपणं भवति। केवलं रणे अन्तःपुरस्य आरोपयोगेन एकदेशविवर्तनात् एकदेशविवर्तिरूपकम्।

## निरङ्गरूपकम्

निरङ्गरूपकं तत्र भवति यत्रांशे स्वल्पं (एकम्) आरोपविषयत्वेन प्रदीयते। अत्र अंगमल्पमितिकृत्वा (अङ्गमारोपकारणम्) निरङ्गम्, निरङ्गरूपकं शुद्धं मालारूपञ्चेति द्विविधम्।

शुद्धनिरङ्गम्—

"कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्
अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
प्रवृत्तोस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्।"

अत्र पद्ये केवलं प्रेम मात्रे लतिकारोपणं भवति । नतु अन्यत्र कुत्रापि । अन्यरूपकमिश्रणाभावात् शुद्धत्वमेवास्य रूपकस्य ।

मालानिरङ्गम् ।— "मालातु पूर्ववत्" अर्थात् मालोपमावत् । यथा— मालोपमायां एकस्योपमेयस्य वहूपमानसम्बन्धः तथा अत्रापि एकस्मिन् उपमेये वहूपमानानांमारोपः । यथा—

"सौन्दर्य्यस्य तरङ्गिणीतरुणिमोत्कर्षस्य हर्षोद्गमः
कान्तेः कार्मण कर्मनर्मरहसामुल्लासना वासभूः ।
विद्या वक्रगिरां विधेरनवधि प्रावीण्य साक्षात् क्रिया
बाणाः पञ्चशिलीमुखस्य ललना चूडामणिः सा प्रिया ।"

अत्र एकत्र उपमेय-प्रियारूपे तरङ्गिणी, हर्षोद्गमः, कार्मणकर्म इति सर्वेषां आरोपणात् मालानिरङ्गरूपकम् ।

## परम्परितरूपकम्

"नियतारोपणोपायः स्यादारोपः परस्य यः
तत् परम्परितं श्लिष्टे वाचके भेदभाजिवा"

निश्चित रूपेण यत् आरोपणं तन्निमित्तं यदि अन्यस्यारोपः भवति तर्हि तत् परम्परित रूपकम् । अयमत्र निर्गलितोऽर्थः यत्— यदि कुत्रचित् वर्णयितुं योग्य यदारोपणं तदर्थं अन्यारोपणं कारणं भवति तर्हि तत्र परंपरित रूपकम् । (परम्परा + इतच्) परंपरित रूपकं श्लिष्टाश्लिष्ट भेदेन द्विविधं सत् केवल—मालारूपयोगेन चतुर्विधं भवति ।

अर्थात् प्रथमतः परम्परितरूपकं श्लिष्टमालारूपम् अश्लिष्टमालारूपञ्चेति द्विविधम् । पुनः एतद्द्वयं श्लिष्टमालारूप केवलम्, अश्लिष्टमालारूप केवलञ्चेति मिलित्वा साकल्येन चतुर्विधम् ।

१- परम्परितस्य श्लिष्टमालारूपम्—

"विद्वान्मानसहंसवैरिकमलासंकोचदीप्रद्युते
दुर्गामार्गण नीललोहित समित्स्वीकार वैश्वानर ।
सत्यप्रीतिविधानदक्ष विजय प्राग्भावभीम प्रभो !
साम्राज्यं वरवीर ! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ।"

अत्र विदुषां मानसमेव मानसरोवरः इति आरोपणं भवति । अर्थात् पण्डितानां मानसे मानसरोवरस्य आरोपणं भवति । एतत् आरोपणं राज्ञि हंसारोपणं प्रति कारणम् । यदि मानसे मानसरोवरारोपणं न भवति तर्हि राज्ञि हंसारोपणं न सम्भवेत् । मानसपदे श्लिष्टयोगात् अत्र परम्परित श्लिष्टमालारूपकम् । एवमन्यत्र वैरिकमलासङ्कोचदीप्रद्युति- प्रभृति स्थलेषु ज्ञेयम् ।

२- अश्लिष्टमालारूपम्—

"आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद् वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः ।
संग्रामामृतसागरप्रमथन क्रीडाविधौमन्दरः ।
राजन् राजति वीरवैरिवनितावैधव्यदस्ते भुजः ।"

श्लोकेऽस्मिन् जयकुञ्जरयोः पृथगुपादानात् न मानसादिपदवत् श्लिष्टत्वम् । एकस्मिन् भुजे, आलानस्य, सेतोः पूर्वाद्रेः उपाधानस्यच

आरोपणात् मालारूपकम् । अपिच भुजे आलानस्यारोपणं प्रति जयेकुञ्जरस्यारोपः निमित्तम् । इति कृत्वा परम्परितस्य अश्लिष्ट-मालारूपम् ।

३- परम्परितस्य केवलं श्लिष्टरूपम्— यथा—

"अलौकिकमहालोकप्रकाशित जगत्त्रयः ।
स्तूयते देवसद्वंशमुक्तारत्नं न कै भवान् ।।

उदाहरणेऽस्मिन् आरोपविषयारोपाश्रययोः सत्कुलवेण्वोः श्लिष्टपदाभिधानात् श्लिष्टत्वम् । अपिच वंशे कुले) वंशस्य (वेणोः) आरोपणं राज्ञि मुक्तारोपणं प्रति कारणम् । अतः केवलं श्लिष्ट रूपकम् ।

४- परम्परितस्य केवलं अश्लिष्ट रूपकम्—

निरवधि च निराश्रयं च यस्यस्थितमनिवर्तित कौतुकप्रपञ्चम्
प्रथम इह भवान् स कुर्ममूर्त्ति र्जयति चतुर्दशलोकवल्लिकन्दः ।

श्लोकेऽत्र लोक-वल्लि पदयोः पृथग् कथनात् अश्लिष्टत्वम् । लोके वल्लित्वस्य आरोपणं विष्णौ कन्दत्वारोपणं प्रति कारणमितिकृत्वा परम्परितस्य अश्लिष्ट केवलं रूपकम् ।

## प्रश्नः ५०- अपह्नुति-अर्थश्लेष-समासोक्ति-निदर्शनालङ्काराणां लक्षणानि लक्ष्येषु योज्यानि ।

उत्तरम्— अपह्नुतिः—

"प्रकृतं प्रतिसिद्ध्यान्यत् स्थापनं स्यादपह्नुतिः ।"

अर्थात् यत्र उपमेयमसत्यंकृत्वा (लुक्कायित रूपेण संस्थाप्य) उपमानस्य स्थापनं क्रियते तत्र अपह्नुत्यलङ्कारः भवति ।

यथा—

"अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये !
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ।
अमुष्येयं मन्ये विगलदमृतस्यन्द शिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ।"

अत्र चन्द्रस्य सत्यभूतं कलङ्कं निषिध्य (असत्यत्वेन स्थापयित्वा) असत्यस्य रजनिनायिकारूपस्य उपमानस्य स्थापनात् अपह्नुत्यलङ्कारः।

अर्थश्लेषः— "श्लेषः स वाक्ये, एकस्मिन् यत्रानेकार्थता भवेत् ।" यत्र परिवृत्तिसहानामेव शब्दानां अनेके अर्थाः भवन्ति (एकवृन्तगत-फलद्वयन्यायेन) तत्रार्थश्लेषोभवति । यथा—

"उदयमयते दिङ्मालिन्यं निराकुरुतेतराम्
नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः ।
रचयतितरां स्वैराचार प्रवर्तन कर्तनम्
वतवत लसत्तेजः पुञ्जो विभाति विभाकरः ।"

उदाहृते पद्ये विभाकरः (सूर्य्यः) उदयमयते, इति कथनात् यथा सूर्य्यः नितरामुदयाचलमाश्रित्य उदयति, तथा विभाकरः (तन्नामक-राजविशेषः) उन्नतिं भजते । उदयमित्यादिस्थलेषु अभिधायाः सयोगादेः नियन्त्रणाभावात् अनेकार्थस्य वाच्यघटकतया परिवृत्ति सहत्वात्र अर्थश्लेषः । विभाकर स्थाने अपि पक्षे सूर्य्यार्थकतया पक्षे राजार्थक-तयाच शब्दपरिवर्तनेन प्रभाकरशब्दस्थापनेनाऽपि श्लेषयोगात् शब्दश्लेषः इति केचित् ।

समासोक्तिः—

"परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः ।"

यत्र श्लिष्टविशेषणैः अप्रकृतार्थस्यबोधनं प्रकृतमर्थमवलम्ब्य सक्षेपेण व्यञ्जनया भवति तत्र समासोक्तिनामालङ्कारः । यथा—

"लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः
जयलक्ष्मी स्तव विरहेनखलूज्ज्वला दुर्बला ननु सा"

अत्र श्लोके व्यवहृतः जयलक्ष्मीशब्दः न कान्तावाचकः । परन्तु श्लिष्टविशेषण माहात्म्यात् (लब्ध्वा तव बाहुस्पर्शमित्यादिना) अप्रकृतोऽपि कान्तावाचकार्थः व्यज्यते । अतः समासोक्तिः ।

निदर्शना—

"अभवन् वस्तु सम्बन्ध उपमा परिकल्पकः ।"

यत्र उपमां परिकल्प्य पदार्थयोरनुपयुज्यमानः सम्बन्धः परिकल्प्यते तत्र निदर्शनालङ्कारः भवति । यथा—

"क्व सूर्य्य प्रभवो वंशः क्व चाल्पविषयामतिः
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्"

यथा उडुपेन समुद्रतरणमसम्भवम् तथा मदीयया क्षुद्रमत्या रघुवंश वर्णनमसम्भवमिति कालिदासेन रघुवंशे लिखितम् । सागरतरण-मुडुपेन यथा असम्भवं तथा रघुवंशवर्णनमिति उपमामाधारीकृत्य मसम्भव पदार्थ वर्णनान्निदर्शनालङ्कारः ।

**प्रश्नः ५१– अप्रस्तुतप्रशंसाया लक्षणं प्रतिपाद्य तद्भेदान् उदाहरणैः स्फुटी कुरुत ।**

उत्तरम्—

"अप्रस्तुत प्रशंसा या सा सैव प्रकृताश्रया"

यत्र अप्राकरणिकस्य वस्तुनः वर्णना प्रकृतार्थ मूलिका भवति तत्र अयं अलङ्कारः भवति। अयञ्च पञ्चप्रकारकः। यथा—

"कार्य्यनिमित्ते सामान्ये विशेषे प्रस्तुते सति
तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा।"

अर्थात् यत्र कार्य्ये वर्ण्णनीयत्वे सति कारणस्याप्रस्तुतस्य वर्णनं। तत्र प्रथमः प्रकारः। यत्र कारणे प्रस्तुते सति कार्य्यरूपस्य अप्रस्तुतस्य वर्ण्णनं तत्र द्वितीयप्रकारः। यत्र सामान्ये प्रस्तुतेसति विशेषस्याप्रस्तुतस्य वर्णनं तत्र तृतीय प्रकारः। यत्र विशेषे प्रस्तुते-सति सामान्यभूतस्याप्रस्तुतस्य वर्ण्णनं तत्र चतुर्थप्रकारः' यत्र तुल्ये प्रस्तुतेसति तुल्यरूपस्याप्रस्तुतस्याभिधानं तत्र पञ्चमःप्रकारः क्रमशः उदाह्रियते— यथा—

प्रथमप्रकारः—

"याताः किं न मिलन्ति सुन्दरि! पुनः चिन्ता त्वया मत्कृते
नो कार्य्या नितरां कृशासि कथयत्येवं सवाष्पेमयि!
लज्जामन्थर तारकेण निपतत् पीताश्रुणाचक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः।"

विदेशगमनात् कथं निवृत्तोसि इति गन्तुकामं यदा कश्चित् पृच्छति तदा तेन यदुत्तरं दत्त तत् श्लोकेऽस्मिन् विद्यते। अत्र गमननिवृत्तस्य किं कारणमिति कार्य्ये पृष्टेसति प्रिया भाविमरणरूपकारण वर्णनात् अप्रस्तुत प्रशंसालङ्कारः।

द्वितीयप्रकारः—

"राजन् राजसुता न पाठयति मां देव्योऽपितुष्णीं स्थिता
कुब्जे! भोजय मां कुमार सचिवैर्नाद्यापिकिंभुज्यते।
इत्थं नाथ! शुकस्तवारि भवने मुक्तोऽध्वगैः पञ्जरात्
चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते।"

पराक्रमशालिनः राज्ञः विभीय शत्रुपलायन रूपे कारणे प्रस्तुते सति पथिकविमुक्तशुकभाषणस्याप्रस्तुतस्यवर्णनात्अप्रस्तुतप्रशंसालङ्कारः।

तृतीयःप्रकारः—

"एतत्तस्य मुखात् कियत्कमलिनी पत्रे कणं वारिणो
यन्मुक्ता मणिरित्यमंस्त स जडः शृण्वन् यदस्मादपि।
अङ्गुल्यग्रलघुक्रिया प्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तः शुचा।"

मूर्खजनानां संततमेव अस्थाने (असम्भवपदार्थे) सत्यज्ञानं भवतीति सामान्ये प्रस्तुतेसति अत्र जड़विशेषस्य वारिकणे मुक्तारूप ज्ञानस्याप्रस्तुतस्य वर्णनात् अप्रस्तुत प्रशंसालङ्कारः।

चतुर्थप्रकारः—

"सुहृद्वधूवाष्पजलप्रमार्जनं करोति वैरं प्रतियातनेन यः
स एव पूज्यः समुपान् स नीतिमान् सुजीवितं तस्य
स भाजनं श्रियः।

नरकासुर मरणानन्तरं शाल्वं प्रति तन्मन्त्रिणः उक्तिरियम्। यदि घातकं कृष्णं हत्वा नरकासुर पत्नीनां शोकं दूरी करिष्यति तर्हि भवान् प्रशंस्यः। इति विशेषे वर्णने "यः मित्रारिं निहत्य तत् स्त्रीलोतक-निवारणं करोति सः पूज्यः" इति सामान्यस्य कथनात् अप्रस्तुत प्रशंसालङ्कारः।

(सामान्यं बहुव्यापकत्वेन, विशेषः अल्पव्यापकत्वेन बोध्यम्)

पञ्चमप्रकारः— पञ्चमप्रकारः भेदत्रयमण्डितः। श्लेषसमासोक्ति-सादृश्ययोगात् तुल्ये प्रस्तुते सति तुल्यरूपस्याप्रस्तुतस्याभिधानाद् अप्रस्तुतप्रशंसालङ्कारः। अत्र केवलं श्लेषमूलिका उदाह्रियते। यथा—

"पुंस्त्वादपि प्रविचलेत् यदि यद्यधोऽपि—
यायात् यदि प्रणयने न महानपि स्यात्।
अभ्युद्धरेत् तदपि विश्वमितीदृशीयं—
केनापि दिग् प्रकटिता पुरुषोत्तमेन।"

युद्धे पराजितं कञ्चन राजानं प्रति पुनः युद्धं कृत्वा अपहृतराज्य-प्राप्तये तन्मन्त्रिणः उक्तिरियम्। यथा पुरुषोत्तमः पुरुषचिह्नात् (अमृतवण्टनकाले) दूरीभूय अर्थात् नारीमूर्तिमवलम्ब्य, बलिसकाशात् दानग्रहणकाले स्वस्य मर्य्यादां नावलोक्य पृथिवीरक्षणं कृतवान् तथा

भवान् पौरुषेण (शौर्य्येण) रहितोऽपि पृथिवी रक्षणं करोतु (पुनः युद्धं कृत्वा अपहृत राज्यमानीय पालयतु)

अत्र सज्जन पुरुषस्य वर्ण्णना प्रसङ्गे सति तत्तुल्यस्य अप्राकरणिकस्य विष्णोः वर्णनात् (श्लेषेण) अप्रस्तुत प्रशंसायाः पञ्चमभेदस्य प्रथमप्रकारः ।

**प्रश्नः ५२— अतिशयोक्ति—प्रतिवस्तूपमा-दृष्टान्त—दीपक—तुल्ययोगिता—व्यतिरेकाक्षेपानामलङ्काराणां लक्षणानि लक्ष्येषु योज्यानि ।**

उत्तरम्— अतिशयोक्तिः—

"निगीर्य्याध्यवसानं तु प्रकृतस्य परेणयत्
प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौच कल्पनम्
कार्य्यकारणयोर्यश्च पौर्वापर्य्य विपर्य्ययः
विज्ञेयातिशयोक्तिः सा"

इयमतिशयोक्तिश्चतुर्वा । यत्र उपमानेन (परेण) कवलीकृतस्य उपमेयस्य प्रतिपादनं भवति तत्र एकः प्रकारः । यत्र प्रकृतवस्तुनः प्रकारान्तरेणाभिधानं भवति तत्र द्वितीयः प्रकारः । यत्र "यदि" इति शब्देन असम्भविनः अर्थस्य कल्पनं भवति तत्र तृतीयः प्रकारः । यत्र कारणकार्य्ययोर्वैपरीत्यं भवति, अर्थात् आदौ कारणमनुक्त्वा कार्य्य कथनानन्तरं कारणं चेत् उच्यते तत्र चतुर्थः प्रकारः भवति । क्रमशः उदाहरणा क्रमेण प्रदर्श्यते,—

प्रथमातिशयोक्तिः—

"कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्"

प्रियावलोकनानन्तरं तत्सखीं प्रति कस्यचित् उक्तिवर्णनप्रसङ्गे श्लोकोयं अवतारितः। अत्र नायकः नायिका मुखं कमले नेत्रं कुवलये शरीरं कनकलतिकायां निगीर्य्य "इयमद्भुता केति" वितर्कयति। अतः प्रथमातिशयोक्तिः। (अत्र प्राकरणिकभूतानां नायिकामुखादीनां कमलादिशब्देनाध्यवसानम्)

द्वितीयातिशयोक्तिः—

"अन्यत् सौकुमार्य्यं अन्यैवच कापिवर्तनच्छाया
श्यामा सामान्य प्रजापतेः, रेखैव न भवति"

नायिकायाः सौन्दर्य्यवर्णना प्रसङ्गे काचित् वदति लोके यत् सौकुमार्य्यं वर्तते तदन्यत्। अस्याः शरीरस्य च्छाया (सौकुमार्य्यम्) अन्या। इयं सृष्ठिकर्तुः निर्माण परिपाटी नभवति। अर्थात् प्रजापति-निर्माणकलामतिवर्तते इयम्। अत्र श्लोके लोकप्रसिद्ध सौकुमार्य्यात् अस्याः सौकुमार्य्यस्य भेदः दर्शितः। अर्थात् नायिका सौकुमार्य्यस्य प्रकारान्तरेण वर्णनात् द्वितीया।

तृतीयातिशयोक्तिः—

"राकायामकलङ्कं चेदमृताशोर्भवेद्वपुः
तस्या मुखं तदा साम्यपराभवमवाप्नुयात्।"

यदि पूर्णिमायां चन्द्रः कलङ्क रहितः भवति तर्हि नायिका मुखेन सह सः साम्यं प्राप्नुयात्। अत्र यदीति पदद्वारेण चन्द्रस्य कलङ्क हीनत्व

तर्कणात् तृतीयातिशयोक्तिः ।

चतुर्थातिशयोक्तिः—

"हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।
चरमं रमणीवल्लभ ! लोचनविषयं त्वया भजता ।"

यत्र कार्य्यस्य कथनं प्रागेव कारणस्य कथनं पश्चादेव भवति तत्र इयमतिशयोक्तिः । अत्र मालत्याः कामपीड़ां प्रति नायकः कारणम् । नायकं प्रति कथनावसरे "आदौ त्वया मालत्याः हृदयं अधिष्ठितम् । पश्चात् कन्दर्पेणाधिष्ठितमिति वक्तव्ये वैपरीत्येन आदौ कन्दर्पेण पश्चात्त्वया तद् हृदयमधिष्ठितिमिति कथनात् कार्य्यकारणयोः पौर्वापर्य्यत्वात् चतुर्थातिशयोक्तिः ।

प्रतिवस्तूपमा— "प्रतिवस्तूपमा तु सा—

"सामान्यस्य द्विरेकस्य यत्र वाक्य द्वये-स्थितिः

यत्र एकस्य साधारणधर्मस्य उभयोः, उपमानोपमेययोः मध्ये वारद्वयं व्यवहारो भवति तत्रायमलङ्कारः । यथा—

"देवीभावं गमिता परिवार पदं कथं भजत्वैषा
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ।"

अत्र "या नायिका देवीत्वेन वर्तते सा कथं परिचारिकापदं यायात्" ? इति उक्त्वा निषेधः कृतः । पुनश्च वाक्यान्तरे दैवतरूपाङ्कित रत्नस्याव्यवहार्य्यं प्रदर्श्य निषेधः कृतः । एकस्य एव निषेधरूप साधारणधर्मस्य द्विः कथनात् प्रतिवस्तूपमा ।

दृष्टान्तः—

"दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्"

यत्र उपमान वाक्ये उपमेयवाक्ये उपमानोपमेयसाधारणधर्माणां बिम्बप्रतिबिम्बन्यायेनस्थितिर्जायते तत्र दृष्टान्तनामालङ्कारः भवति । यथा—

"त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम्
आलोके हि हिमांशोः विकसतिकुसुमं कुमुद्वत्याः ।"

अत्र श्लोके राजाचन्द्रयोर्मध्ये, विरहिणीनायिका कुमुद्वत्योर्मध्ये मनःपुष्पयोर्मध्ये, कन्दर्पज्वलिताग्निज्वलितयोर्मध्ये बिम्बप्रतिबिम्ब भावात् दृष्टान्तालङ्कारः ।

दीपकम्—

"सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्
सैवक्रियासुवह्वीषु कारकस्येतिदीपकम्"

यत्र प्राकरणिकाप्राकरणिकानां (उपमेयोपमानानाम्) साधारणधर्मः सकृद व्यवह्रियते अपिच यत्र एकस्य कारकस्य (कर्ताकर्मत्यादिकारक मध्येषु कस्यचिदेकस्य वह्वीषु क्रियासु व्यवहारः भवति तत्र दीपकम् । यथा—

'कृपाणानां धनं नागानां फणामणिः केसराः सिंहानाम्
कुलबालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम्"

अत्र प्राकरणिकत्वेन कुलबालिकास्तनानां तदुपमानत्वेनाप्राकरणिक कृपणनागसिंहानां धनमणिकेसराणां च स्पर्शनक्रियायाः (साधारण-धर्मस्य) सकृत् कथनात् प्रथमदीपकालङ्कारः ।

"खिद्यति कूणति वेल्लति विचलति निमिषति विलोकयतितीर्यक्
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणता वधूः शयने"

अत्र एका वधूरेव कर्ता पदम् । तस्या खिद्यति, कूणति प्रभृतिभिः क्रियाभिः साकं सम्बन्धयोगात् द्वितीय प्रकारः कारकदीपकालङ्कारः ।

तुल्ययोगिता—

"नियतानां सकृद्धर्मः सापुनः तुल्ययोगिता"

यत्र नियतानां (प्राकरणिकानामप्राकरणिकानां वा) गुणक्रियादिरूपः साधारणधर्मः एकवारमात्रं गृह्यते तत्र तुल्ययोगवलात् तुल्ययोगितालङ्कारः भवति । यथा—

"पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः
आवेदयति नितान्तं क्षेत्रियरोगं सखि ! हृदन्तः ।"

श्लोकेऽस्मिन् विरहस्यानुभावत्वेन प्राकरणिकानां पाण्डुत्वादीनां आवेदनरूपः साधारणधर्मः एकवारमात्रं गृहीतः । अतः तुल्ययोगितालङ्कारः ।

व्यतिरेकः—

"उपमानात् यदन्यस्य व्यतिरेकः स एव सः ।"

यत्र उपमानात् उपमेयस्य आधिक्यं वर्ण्यते तत्र व्यतिरेकः । यथा—

"क्षीणः क्षीणोऽपि शशी भूयोभूयोऽभिवर्द्धते सत्यम्
विरम प्रसीद सुन्दरि ! यौवनमनिवर्ति यातं तु ।"

अत्र उपमानभूतात् चन्द्रक्षयात् उपमेयभूतस्य यौवनक्षयस्याधिक्यं भवति । यतः चन्द्रः क्षयतामासाद्य पुनः वृद्धिं भजते । तत्र नास्ति कश्चिद्विशेषः । परन्तु यौवनं क्षयतां गतं सत् न पुनः आगच्छति । अतः क्षयांशे उपमानात् उपमेयस्याधिक्य योगात् व्यतिरेकः ।

आक्षेपः—

"निषेधोवक्तुमिष्टस्य यो विशेषाभिधित्सया
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधामतः।"

यत्र प्राकरणिकत्वात् वक्तुमभिलषितस्य पदार्थस्य निषेधः क्रियते तत्राक्षेपालङ्कारः। सच वक्ष्यमाणविषयत्वेन- उक्तविषयत्वेन द्विधा।

वक्ष्यमाणविषये—

"ए एहि किमपि कस्याऽपिकृते निष्कृपा भणाम्यलमथवा
अविचारित कार्य्यारम्भिणी म्रियतां न भणिष्यामि।"

नायक विरहेण नायिकायाः गुरुतरामवस्थां वक्तुं अभिलाषो वर्तते परन्तु "नभणिष्यामि" "अलमथवा" इत्यनेन तस्य निषेधः कृतः।

वक्ष्यमाणत्वरूपायाः मरणावस्थायाः अभिधानस्य निषेधकरणात् वक्ष्यमाणाक्षेपालङ्कारः।

उक्तविषये—

"ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनी पल्लवाः।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे।"

विरहिणीं नायिकां प्रति ज्योत्स्नामौक्तिकदाम प्रभृतयः स्फुलिङ्गवत् आचरन्तीति उक्त्वा पुनः "किमनेनोक्तेन" "न ब्रूमहे" इत्यादिना उक्तविषयस्य निषेध करणात् उक्तविषयाक्षेपालङ्कारः।

प्रश्नः५३-विभावनाविशेषोक्ति यथासंख्यार्थान्तरन्यासालङ्काराणां लक्षणानि उदाहरणानि च देयानि।

उत्तरम्— विभावना—

"क्रियायाः प्रतिषेधेपि फलव्यक्तिर्विभावना।"

यत्र क्रियायाः (कारणस्य) प्रतिषेधेऽपि फलव्यक्तिर्भवति, अर्थात् कारणं विना कार्य्योत्पत्तिकथनं भवति तत्रायमलङ्कारः। यथा—

"कुसुमित लताभिरहताप्यधत्त रुजमलिकुलैरदष्टापि।
परिवर्तते स्म नलिनी लहरीभिरलोलिताप्यघूर्णत सा"।

लता ताडनं पीडाया हेतुः। भ्रमरदंशनं तथा तरङ्गचलनं परिवर्तन-घूर्णनयोः कारणम्। परन्तु एतान् हेतून् विना कार्य्याणां पीडादीनां कथनात् विभावनालङ्कारः।

विशेषोक्तिः—

"विशेषोक्तिरखण्डेषु कारणेषु फलावचः।"

यत्र कारणस्य विद्यमानत्वेऽपि कार्य्योत्पत्तिर्नैवभवति तत्रायं अलङ्कारः। यथा—

"निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते
श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोङ्गना सा"

अत्र आलिङ्गनत्यागरूपकार्य्यं प्रति विद्यमानेषु अपि निद्रापगमनत्व द्वारदेशं प्रति सखीजनागमनत्व-सूर्य्योदयत्वेषु कारणेषु आलिङ्गनत्याग कार्य्याभाव कथनात् विशेषोक्तिः।

यथासंख्यालङ्कारः—

"यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ।"

यत्र क्रमानुसारं स्थितानां पदार्थानां सम्बन्धः क्रमेण भवति तत्र यथासंख्यालङ्कारः । प्रथमस्य प्रथमेन सह द्वितीयस्य द्वितीयेन सह सम्बन्धः कल्पनीयः । यथा—

"एकस्त्रिधा वससि चेतसि चित्रमत्र देव द्विषां च विदुषां च मृगीदृशां च तापं च संमदरसं च रतिं च पुष्णन् शौर्योष्मणा च विनयेन च-
लीलया च—

द्विषां, बिदुषां, मृगीदृशां च हृदि एक एव राजा क्रमानुसारं तापं संमदरसं (आनन्दम्) रतिश्च पुष्णन् निवसति । यथा द्विषामित्यादि पदं वर्तते तथा पादान्तरे तापादि पदं वर्तते । अतः यथा संख्यालङ्कारः ।

अर्थान्तरन्यासः—

"सामान्यं वा विशेषो वा तदन्येन समर्थ्यते
यत्तु सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ।"

यत्र स्थले सामान्यं विशेषेण, विशेषः सामान्येन वा समर्थ्यते तत्रार्थान्तरन्यासालङ्कारः । अनेन प्रकारेण द्विविधोऽयं साधर्म्यवैधर्म्यभावेन चतुःप्रकारको भवति । दृष्टान्ते सामान्यं सामान्येन विशेषः विशेषेण समर्थ्यते इह तु तत् वैपरीत्यमिति भेदः । यथा—

"निजदोषावृतमनसामति सुन्दरमेव भाति विपरीतम्
पश्यति पीतोपहतः शशिशुभ्रं शङ्खमपि पीतम्"

उदाहृते पद्ये मत्र्कीय दोषाः सामान्यपदभाजः । एतत् सामान्यं शङ्खपीतविशेषिण द्वारेण समर्थितं भवति । अतः विशेषेण सामान्यस्य समर्थतात् प्रथमार्थान्तर न्यासालङ्कारः । एवमन्येतक्यीः ।

## प्रश्नः ५४— विरोध-स्वभावोक्ति-व्याजस्तुति-सहोक्ति-विनोक्ति-अलङ्काराणां उदाहरणानिसलक्षणानि देयानि ।

उत्तरम्— विरोधः—

"विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद् वचः ।"

यत्र उभयोर्वस्तुनोः मध्ये वस्तुतः विरोधो नास्ति परन्तु श्रवण मात्रेण विरोधवत् प्रतीति जायते, तत्र विरोधाभासालङ्कारः । अयमलङ्कारो दशधा । जातिगुणक्रियाद्रव्याणां वक्षमाण रीत्या दशधा सम्भवात् । तत्र जातेः जातिगुणक्रियाद्रवैः सह विरोध्र योगात् प्रथमतः चत्वारः प्रकाराः । गुणस्य गुणक्रिया द्रवैः सह विरोध योगात् त्रयः प्रकाराः । क्रियायाः क्रियाद्रव्याभ्यां सह विरोधयोगात् दो प्रकारौ । द्रव्यस्य द्रव्येण सह विरोधयोगात् एकः प्रकारः । इत्थं साकल्येन मिलित्वा दशधा । अत्र केवलं जातेः जात्यासह विरोध योगात् कथं विरोधाभासालङ्कार भवति तत् प्रदर्श्यते । यथा—

"अभिनव नलिनी-किसलयमृणालवलयादि दवदहनराशिः
सुभग कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते"

नायक विरहेण नायिकां प्रति सरस पल्लवं तथा मृणालवलयं अग्निवत् आचरतीति कथनेनात्र कोमलमृणालादीनां अग्निवत् दाहकत्वं सूचितं भवति येन विरोधः जातः । परन्तु विरहोद्दीपकतया एतेषां पीड़कर-

त्वमित्यर्थ करणेन विरोधः परिहृतो भवति । अत्र नलिनीत्वं जातिः दवदहनत्वमपि जातिः जातेः जात्यासह विरोधात् प्रथमभेदः । एवमन्ये कल्पनीयाः ।

स्वभावोक्तिः—

"स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्"

यत्र शिशु-पशु-पक्षीत्यादिनां स्वभाववर्णनं क्रियते तत्र स्वभावोक्तिः यथा—

"पश्चादङ्घ्री प्रसार्य्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चैः—
रासज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय ।
घासग्रासाभिलाषादनवरतचलत् प्रोथतुण्ड-स्तुरङ्गो—
मन्दं शब्दायमानो विलिखिति शयनादुत्थितः क्ष्मां खुरेण"

घासभोजनकाले अश्वानां या अवस्था परिलक्ष्यते श्लोकेऽस्मिन् कविना साऽवस्था वर्णिता । अतः अश्वस्य स्वभाववर्णनात् स्वभावोक्तिरलङ्कारः ।

व्याजस्तुतिः—

"व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ।"

यत्र स्तुति (प्रशंसा) व्याजेन निन्दा, अथवा निन्दा व्याजेन स्तुतिः क्रियते तत्र व्याजस्तुत्याख्यालङ्कारः । यथा—

"हित्वा त्वामुपरोधवन्ध्यमनसां मन्ये न मौलिः परो
लज्जावर्जनमन्तरेण न रमा-मन्यत्र संदृश्यते ।
यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ।"

अत्र आश्रित त्यागरूपनिन्दाच्छलेन महादानिता सूच्यते । अतः निन्दापूर्विका स्तुतिरियम् ।

"हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्तित्वत्सदृश: परः परहिताधाने गृहीतव्रतः।
तृष्यत् पान्थजनोपकारघटनावैमुख्य लब्धा यशो—
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः।"

मरुप्रदेश: जलहीनत्वात् पान्थाय जलं दातुमसमर्थः । अतः अयं अयशोभारः तेनगृहीतः । समुद्रोऽपि क्षारजलराशिभिः पूर्णत्वात् अयशोभारं वहन् मरोः साहाय्यं करोति । अतः समुद्रस्य स्तुतिः कृतात्र । परन्तु तृषितानुपकारकत्वात् समुद्रोऽपि मूल्यहीनः इति निन्दार्थः स्तुतिमाध्यमेन प्रकाशी भवति । अतः अत्र स्तुतिपूर्विकानिन्दा ।

सहोक्तिः,—

"सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्"

यत्र "सहसाकं सार्धं सममिति" पद बलेन कविप्रतिपादित चार्वर्थयुक्तानेकार्थाभिधानं भवति तत्र सहोक्तिः भवति । यथा—

"सहदिवसनिशाभिर्दीर्घाः श्वासदण्डाः
सह मणिवलयैर्वाष्पधारा गलन्ति ।
तवसुभगवियोगे तस्या उद्विग्नायाः
सहच तनुलतया दुर्बला जीविता शा"

अत्र श्लोके श्वासदण्डादि पदेषु दीर्घत्वाद्यन्वयः शब्दोपात्तः । सहशब्दयोगेन कविप्रतिपादितचार्वर्थं प्रतीतिरपि जायते अतः सहोक्तिः अलङ्कारः ।

विनोक्तिः—

"विनोक्तिः सा विनान्येन यत्रान्यः सन्न नेतरः।"

यत्र केनचित् विना कश्चित् पदार्थः न शोभितोभवति अथवा नाशोभितोभवति तत्र विनोक्तिः। यथा—

केनचिद्विनाकस्यचिदशोभनत्वम्—

"अरुचिर्निशया विना शशी शशिना साऽपि विना महत्तमः।
उभयेन विना मनोभवःस्फुरितं नैवचकास्ति कामिनोः।"

अत्र श्लोके निशया विना शशिनः, तथा शशिना विना निशायाः अशोभनं भवतीति प्रतिपाद्यते। अतः विनोक्तिः।

केनचिद् विनाकस्यचित् शोभनत्वम्—

"मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेनविना नरेन्द्रसूनुः।"

अत्र श्लोके मृगलोचनया विना राजपुत्रस्य विचित्रसद्व्यवहारत्वस्य कथनात् द्वितीयप्रकारविनोक्त्यलङ्कारः।

## प्रश्नः ५५- परिवृत्तिभाविककाव्यलिङ्गपर्यायोक्त्यलङ्काराणां लक्षणोदाहरणानि देयानि।

उत्तरम्— परिवृत्तिः—

"परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः।"

यत्र समेन समस्याधिक्येनन्यूनस्य वा न्यूनेनाधिक्यस्यविनिमयो भवति तत्र परिवृत्तिः। यथा—

समेनसमस्याधिक्येनन्यूनस्य—

"लतानामेतासामुदित कुसुमानां मरुदयं।
मतं लास्यं दत्वा श्रयति भृशमामोदमसमम्।
लतास्त्वध्वन्यानामहह दृशमादाय सहसा
ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम्।"

पवनः लताभ्यः स्व संचलनेन लास्यं दत्वा। ताभ्यः पुष्पसौरभं गृह्णाति। अतः समपदार्थविनिमयेन समपदार्थग्रहणात् परिवृत्तिः। द्वितीयार्धे लताः पान्थेभ्यः नयनानि आनीय तेभ्यः विरहवेदनामर्पयन्तीति उत्तमपदार्थनयनेन न्यूनपदार्थार्पणात् परिवृत्तिः।

न्यूनपदार्थेनोत्तमपदार्थस्य विनिमयः—

"नानाविधप्रहरणैर्नृप संप्रहारे स्वीकृत्यदारुणनिनादवतः प्रहारान्
दृप्तारिवीरविसरेण वसुन्धरेयं निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा।"

श्लोकेऽस्मिन् अनधिकप्रहारसमर्पणेन मूल्यवतीपृथिवी गृहीतेति कथनेन न्यूनपदार्थेनोत्तमस्य विनिमयात् परिवृत्तिः।

भाविकालङ्कारः—

"प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः।"

यत्रातीतकालिकाः भविष्यत्कालिकाश्च कविना योगिवत् प्रत्यक्षाः क्रियन्ते तत्र भाविकालङ्कारः। यथा—

"आसीदञ्जनमत्रेति पश्यामि तवलोचने
भाविभूषणसम्भारां साक्षात् कुर्वे तवाकृतिम्।"

अत्र पद्ये पूर्वार्धे अतीतकालिकाञ्जनस्य तथा उत्तरार्धे भविष्यद् कालिकस्यालङ्कारस्य प्रत्यक्ष तर्कणात् भाविकालङ्कारः।

काव्यलिङ्गम्—

"काव्यलिङ्गं हेतोर्वाक्यपदार्थता।"

यत्र एकं प्रति कश्चित् हेतुः (कारणम्) चमत्कारजनकः भवति तत्र काव्यलिङ्गालङ्कारः। हेतोः वाक्यार्थत्वेन, अनेकपदार्थत्वेन, एकपदार्थत्वेन च अस्य त्रैविध्यम्। अत्र केवल हेतोः वाक्यार्थत्वमुदाह्रियते। यथा—

"वपुः प्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान्।
नमन्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिभाक्
महेश क्षन्तव्यं तदिदमपराधद्वयमपि।"

अत्र कश्चित् शिवं वक्ति—अहं भवन्तं पुरा न प्रणतवान्। कथं ज्ञातमितिचेत् वपुः प्रादुर्भावात्। यदि तव प्रणामः मया कृतः स्यात् तर्हि अहं शरीरमिदमिहजन्मनि न प्राप्नुयाम्। सांप्रतं यत् नमामि तत् परजन्मन्यपि देहाभावात् प्रणामप्रतिरोधकम्। अतः शरीरलाभं प्रति पूर्वजन्मनि प्रणामशून्यता एव हेतुः। भाविनि नमस्काराभावं प्रति मुक्तिरेव हेतुरिति काव्यलिङ्गम्।

पर्य्यायोक्तिः—

"पर्य्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः।"

वाच्यवाचकभावभिन्नेन अर्थात् व्यञ्जयवञ्जकद्वारेण यदि भङ्ग्यन्तरेण वाक्यार्थस्य कथनं स्यात् तर्हि पर्य्यायोक्त्यलङ्कारः भवति। यथा—

"यं प्रेक्ष्यचिररूढाऽपि निवासप्रीतिरुज्झिता।
मदेनैरावणमुखे मानेन हृदये हरेः।"

दशाननमवलोक्य इन्द्र: ऐरावणश्च स्वकीयं गर्वं जहार इति । अर्थः वाच्यवाचकाभ्यां न भवति । मदं (मदजलम्) तथा मानः रावण-दर्शनेन स्व स्व स्थाने अर्थात् मदं ऐरावण मुखे, मान: हरे हृदये स्थातुं नेयेष इत्यर्थः भङ्ग्यन्तर भावेन निःसरति । अतः अत्र पर्य्यायोक्तिः ।

## प्रश्नः ५६- उदात्त–समुच्चय–पर्य्यायानुमानपरिकरालङ्काराणां लक्षणानि उदाहरणेषु योज्यानि ।

उत्तरम्— उदात्तालङ्कारः—

"उदात्तं वस्तुनः सम्पत्"

यत्र कस्यचित् पदार्थस्य धनशौर्य्यादीनां आधिक्यं वा कस्यचिज्जनस्य महत्त्वशालिन: वर्णनं क्रियते तत्रायमलङ्कार: । यथा—

"मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलत् बालाङ्घ्रिलाक्षारुणाः ।
दूराद्दाड़िमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु भोजनृपते स्तत्त्यागलीलायितम् ।"

भोजराजशासनकाले ये विद्वांस आसन् तेषां गृहसमृद्धिरत्र श्लोके वर्ण्यते । केलीशुकाः ललनापादरञ्जितानि मौक्तिकानि दाडिमबीज-शङ्कया कर्षन्तीति कथनेन गृहसमृद्धेः महत्त्वं प्रकटी भवति । अतः उदात्तालङ्कारः ।

समुच्चयः—

"तत्सिद्धिहेतावेकस्मिन् यत्रान्यत्तत्करं भवेत् ।" समुच्चयोऽसौ ।

यत्रालङ्कारे एकस्य प्रस्तुतस्य कार्य्यस्य साधकरूपेण अनेके सहायका हेतवो विद्यमाना भवन्ति तत्र समुच्चयस्य प्रसक्तिः। यथा—

"दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं।
गाढं प्रेम नवं वयोतिकठिनाः प्राणाः कुलं निर्मलम्
स्त्रीत्वं धैर्य्यविरोधि मन्मथसुहृत् कालः कृतान्तोऽक्षमः
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थ शठः"

केवलं विरहासहनत्वंप्रति स्मरमार्गणाः कारणं इति एकमेव कारण प्रभूतम्। परन्तु विरहासहनत्वं प्रति प्रियस्य दूरस्थितिता, प्रेम्णः गाढता वयसः नवता कालस्य कृतान्तोपमता—इत्यादीनि कारणरूपेण वर्तन्ते। कारणेनैकेन कार्य्यसिद्धिकाले अधिक कारणानां सम्मेलनात् समुच्चयः।

पर्य्यायः—

'एकं क्रमेणाऽनेकस्मिन् पर्य्यायः।'

यदि एकं वस्तु आधारान्तरेषु कालभेदेन तिष्ठति तर्हि पर्य्यायः अलङ्कारोभवति। यथा—

"नन्त्राश्रयस्थितिरियं तव कालकूट केनोत्तरोत्तरविशिष्टपदोपदिष्टा,
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ कण्ठेऽधुना वससि वाचि पुनः-
खलानाम्।"

अत्र श्लोके एकं कालकूटरूपंवस्तु भिन्नाधारेषु समुद्रशिव-खलतुण्डेषु वर्तते। अतः पर्य्यायालङ्कारः।

अनुमानालङ्कारः—

"अनुमानं तदुक्तं यत् साध्यसाधनयोर्वचः।"

यत्र वह्न्यादि साध्यानां ज्ञानं धूमादिसाधनद्वारेण भवति तत्रानु-मानालङ्कारः । यथा—

"यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं
यत् तत्रैव पतन्ति सन्ततममी मर्मस्पृशोमार्गणाः ।
तच्चक्रीकृतचापमंचितशर प्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः ।"

अत्र श्लोके नितरां संपतन्मर्मभेदिवाण— भ्रूव्यापारकसाधन द्वारेण पुरतः कन्दर्पधावनरूपस्य साध्यस्यानुमानात् अनुमानालङ्कारः ।

परिकरः—

"विशेषणैर्यत् साकूतैरुक्तिः परिकरस्तु सः ।"

यत्र अभिप्रायमूलकैर्विशेषणैः काचिदुक्तिः पुष्टा भवति, तत्र परि-करालङ्कारः यथा—

"महौजसो मानधना धनार्चिता धनुर्भृतः संयति लब्धकीर्तयः
न संहतास्तस्य न भेदवृत्तयः प्रियाणि वाञ्छन्त्यसुभिः
समीहितुम् ।"

दुर्योधनं प्रति महाबलाः योद्धारः पक्षपातित्वेन वर्तन्ते । तेषां पुष्ट्यर्थं "महौजसः" इत्यादिविशेषणानि दत्तानि । येन वर्णितानां वीराणामुत्कर्षोजायते । अतः परिकरः ।

**प्रश्नः ५७– व्याजोक्तिपरिसंख्याकारणमालान्योन्योत्तराणामलङ्काराणां याथार्थ्यं उदाहरणैः स्फुटीक्रियताम् ।**

उत्तरम्— व्याजोक्तिः—

"व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम्"

यत्र स्फुटतया प्रकाशितस्य कस्यचित् गोपनं व्याजेन (छलोक्त्या) क्रियते तत्र व्याजोक्तिनामालङ्कारः । अपह्नुतौ साम्यप्रतिपादनं अत्रासाम्यप्रतिपादनमिति भेदः । यथा—

"शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसत्
रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवतादवः शिवः ।"

पार्वत्यासह विवाहसमये हस्तग्रन्थनकाले पार्वत्याः कोमलकरस्पर्शमवाप्य शिवस्य शरीरे रोमाञ्चोजातः । परन्तु प्रकाशितस्यास्य गोपनं, तुहिनाचलस्य (हिमालयस्य) "संपर्कात् ममशरीरे एतद् जायते" इति उक्त्वा शिवेन क्रियते । अतः व्याजोक्तिः ।

परिसंख्या—

"किञ्चित् पृष्टमपृष्टं वा कथितं यत् प्रकल्पते
तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता ।"

यत्र प्रश्नः पृच्छ्यते, अपिच प्रश्नानन्तरं अन्यन्निषिध्य उत्तरं प्रदीयते, तत्र परिसंख्यालङ्कारः। यथा—

"किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः
किमेकान्ते ध्येयं चरण युगलं कौस्तुभभृतः।
किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधिविमुक्त्यै प्रभवति।"

पुंसां किमासेव्यमिति प्रश्नकरणानन्तरं अन्यन्निषिध्य द्युसरितः तटं सेव्यमिति उत्तरलाभात् परिसंख्या। अत्र द्युसरितस्तटं सेव्यं नान्यनदीनामिति निषेधः न शब्दोपात्तः। प्रतीयमान-उपात्तः प्रत्युत भवति।

"किं भूषणं सुदृढमत्र यशो न रत्नं किं कार्य्यमार्य्यचरितसुकृतं न दोषः
किं चक्षुरप्रतिहतं धिषणा न नेत्रं जानाति कस्तदपरः सदसद्विवेकः"

अत्र श्लोके किं सुदृढं भूषणमिति प्रश्ने रत्नं निषिध्य यशः प्रतिपादितम् रत्ननिषेधः शब्दोपात्तः। अतः प्रश्नमूलिका वाच्यव्यवच्छेद्या इयं परिसंख्या।

कारणमाला—

"यथोत्तरं चेत् पूर्वस्य पूर्वस्यार्थस्य हेतुता"—
तदाकारणमालास्यात्"

यत्र उत्तरं उत्तरं प्रति पूर्वस्य कारणतावर्तते, अर्थात् पूर्ववर्णितः पदार्थः यदि उत्तरवर्णितपदार्थंप्रति हेतुर्भवति तर्हि तत्र कारण-मालालङ्कारः स्यात्।

यथा—

"जितेन्द्रियत्वं विनयस्य कारणं गुण प्रकर्षो विनयादवाप्यते
गुण प्रकर्षेण जनोनुरज्यते जनोनुरागप्रभवा हि सम्पदः"

अत्र विनयं प्रति जितेन्द्रियत्वं हेतुः, गुणप्रकर्षं प्रति विनयः हेतुः। जनानुरागं प्रति गुणप्रकर्षोहेतुः, सम्पद्‌विवर्धनं प्रति जनानुरागो-हेतुरिति उत्तरमुत्तरं प्रति पूर्वस्य हेतुता योगात् कारणमालालङ्कारः।

अन्योन्यालङ्कारः—

"क्रियया तु परस्परम्
वस्तुनोर्जननेऽन्योन्यम्"

यदि द्वयोः मिथः सपर्कात् द्वयोः रामणीयकं वर्धते तर्हि तत्र अन्योन्यनामालङ्कारः। यथा—

"हंसानां सरोभिः श्रीः सार्यते अथ सरसां हंस्यैः।
अन्योन्यं एव एते आत्मानं केवलं गरयन्ति।"

पुष्करिणी योगात् यथा हंसानां श्री वर्धते तथा हंसयोगात् पुष्करिण्याः श्रीर्वर्धते। उभयोः सहयोगे उभयोः शोभावर्धनादन्योन्यनालङ्कारः। एवमपि शशिना च निशा, निशयाच शशी... इति ज्ञेयम्।

उत्तरालङ्कारः— उत्तर श्रुतिमात्रतः—

'प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति
असकृद यदसम्भाव्यमुत्तरं स्यात्तदुत्तरम्।"

यत्र उत्तर श्रवणानन्तरं प्रश्नोन्नयनं क्रियते तत्र एकः। यत्र वारम्वारं प्रश्नकरणेऽपि एकवार दुर्बोधोत्तरं मिलति तत्रापरः उत्तरालङ्कारः।

यथा—

"वाणिजिक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च
यावल्लुलितालकमुखो गृहे परिष्वक्कते स्नुषा ।"

अहं व्याघ्रकृत्तिं तथा हस्तिदन्तं क्रेतुमिच्छामि। रूप्यकं नीत्वा तत् प्रदेयमिति क्रेतुः उत्तरश्रवणात् किं तत्रगृहे एतानि द्रव्याणि न सन्ति ? इति प्रश्नतर्कणात् अत्र उत्तरालङ्कारः "का विषमा दैवगति" रिति स्थले विषमा केति प्रश्ने दैवगतिरित्यसम्भाव्योत्तरयोगात् द्वितीय-प्रकारः ।

## प्रश्नः ५८- सूक्ष्मसारासङ्गतिसमाधीनामलङ्काराणां लक्षणानि उदाहरणेषु योज्यानि ?

उत्तरम्— सूक्ष्म—

"कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते
धर्मेण केनचिद् यत्र तत् सूक्ष्मं परिचक्ष्यते"

यत्र कश्चिद् गोप्योऽर्थः येनकेनाऽपि स्मारकेण अन्यस्मै प्रकाश्यते तत्रास्यालङ्कारस्यावकाशः । यथा—

"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया
ईषन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्"

अत्र पद्म निमीलनेन सन्ध्यासङ्केतकालः इति गोप्योऽर्थः पद्मनिमीलन-स्मारकेण नायकाय नायिकया प्रकाश्यते । अतः सूक्ष्मालङ्कारः ।

सारः—

"उत्तरोत्तरमुत्कर्षोभवेत्सारः परावधिः"

यत्र वर्णनाप्रसङ्गे अन्तिमभागः क्रमशः पूर्वभागात् अधिकतरः भवति तत् सारालङ्कारः। यथा—

"राज्ये सारं वसुधा वसुधायां पुरं पुरे सौधम्
सौधे तल्पं तल्पे वराङ्गनानङ्ग सर्वस्वम्।"

अत्र राज्यापेक्षया वसुधायाः, वसुधाऽपेक्षयापुरस्य, पुरापेक्षया सौधस्य सौधापेक्षया तल्पस्य, तल्पापेक्षया वराङ्गनायाः उत्कर्षः क्रमशः पूर्वापेक्षया अधिकतरः भवति। अतः सारालङ्कारः। एवमपि "काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला" इति ज्ञेयम्।

असङ्गतिः—

"भिन्नदेशतयात्यन्तं कार्य्यकारणभूतयोः
युगपद्धर्म्मयोर्यत्र ख्यातिः सा स्यादसङ्गतिः।"

यत्र एकस्मिन् देशे कार्य्यं अपरस्मिन् देशे कारणं तिष्ठति तत्रासङ्गतिनामालङ्कारः। यथा—

"यस्यैव व्रणस्तस्यैव वेदना भणति तज्जनोऽलीकम्
दन्तक्षतं कपोले वध्वाः वेदना सपत्नीनाम्।"

वस्तुतः यस्य व्रणः अस्ति तद्वेदनां सः जानाति। परन्तु अत्र नायिकायाः कपोले स्वामिकृत् दन्तक्षतं सपत्नीनां वेदनां सृजति इति कथनेन कार्य्यकारणयोः पृथुगुपादानं जातम्। येनासङ्गत्यलङ्कारः।

समाधिः—

"समाधि· सुकरं कार्य्यं कारणान्तर योगतः ।"

यत्र अचिन्तनीयकारणयोगात् प्रारिप्सित कार्य्यसाधनं अक्लेशेन जायते तत्र समाधिनामालङ्कारः । यथा—

"मानमस्या दूरीकर्तुं पादयोर्मेपतिष्यतः
उपकाराय दिष्ट्येदमुदितं घन गर्जनम् ।"

यदा नायिकायाः मानदूरीकरणाय नायकः तद्पदतले पतितुमुद्यतो भवति तदा अचिन्तनीय मेघगर्जनकारणयोगात् नायिकाभीतासती नायकमालिङ्गति । नायिकामानभङ्गाय नायकं प्रति घनगर्जनम-चिन्तनीयकारणं भवति । येनाक्लेशेन नायकस्य कार्य्यसिद्धिर्जाता । अतः समाध्यलङ्कारः ।

**प्रश्नः ५६- सम-विषम-अधिक-प्रत्यनीक-मीलितालङ्काराणां लक्षणसाधुता-उदाहरणैः स्फुटनीया ।**

उत्तरम्— समालङ्कारः—

"समं योग्यतया योगः यदि सम्भावितः क्वचित् ।"

यत्र वस्तुविशेषयोः संयोगः औचित्येन सम्भावितो भवति, तत्र समालङ्कारः । यथा—

"धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
रूपे देवोऽप्ययमनुपमो दत्त पत्रः स्मरस्य ।
जातं दैवात्सदृशमनयोः संगतं यत् तदेतत्—
शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ।"

अत्र सुन्दरनायिकया सह योग्यनृपस्य संयोगात् समालङ्कारः । एवं यदि द्वयोः निकृष्टयोः योगः स्यात् तत्रापि समालङ्कारः ।

विषमालङ्कारः—

"क्वचित् यदतिवैधर्म्यान्न श्लेषो घटनामियात्
कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत्
गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये
क्रमेण च विरुद्धे यत् स एष विषमो मतः ।

यत्र अतिसम्बन्धयुक्तयो वस्तुनो वैधर्म्यात् सम्बन्धः (श्लेषः) उपपाद्यमानतां न प्राप्नुयात्, तत्र एकः विषमः ।

यत्र क्रियायाः (सुकर्मयुक्तस्य) फललाभो न भवति, प्रत्युत विपरीत फलं भवति तत्र द्वितीयः विषमः । यत्र कार्य्यगुणेन सह कारणगुणस्य साम्यं न भवति तत्र तृतीयः विषमः । यत्र च कार्य्यक्रियया समं कारणक्रिया विरुद्धा भवति तत्र चतुर्थो विषमः । अत्र केवलं प्रथमस्य उदाहरणं दीयते । यथा—

"शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना
अयं क्व च कुकूलाग्निकर्कशो मदनानलः ।"

अत्र सुकुमारनायिका-मदनानलयो वैधर्म्यात् सम्बन्धः अनुपपन्नः । अतः प्रथमविषमालङ्कारः ।

अधिकालङ्कारः—

"महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात् ।
आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तत् ।"

यत्र आधेये विशाले सति क्षुद्रस्यापि आधारस्य वर्णनं विशालत्वेन क्रियते तत्रैकः अधिकालङ्कारः। यत्र आधारे बृहति सति क्षुद्रस्याधेयस्य वर्णनं विशालत्वेन क्रियते तत्र द्वितीयप्रकारः। यथा—

"अहो विशालं भूपाल भुवनत्रितयोदरम्
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते।"

अत्र आधेयभूतस्य यशसः वैपुल्येऽपि आधारभूतस्य तथा यशोऽपेक्षया न्यूनीभूतस्य भुवनोदरस्य विशालवर्णनात् प्रथमाधिकालङ्कारः।

द्वितीयाधिकालङ्कारः—

"युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः।"

अत्र कैटभद्विषः आधारत्वेन वर्तमानस्य शरीरस्य वैपुलेऽपि तदपेक्षया स्वल्पीभूतस्यानन्दस्य वर्णनं विशालत्वेन क्रियते। अतः द्वितीयप्रकाराधिकालङ्कारः।

प्रत्यनीकालङ्कारः—

"प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया
या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते।"

यत्र प्रतिपक्षस्यापकाराय असमर्थः सन् कश्चित् तत्सम्बन्धिनः अन्यस्य तिरस्क्रियां करोति, तत्र प्रत्यनीकालङ्कारः। यथा—

"यस्य किञ्चिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनाऽपि बाधते।"

राहोः मस्तक च्छेदनानन्तरं तद्वैरित्वेन कृष्णः परिगणितः। राहुः कृष्ण जेतुमसमर्थः सन् तन्मुखतुल्यं चन्द्रमधुनाऽपि ग्रसतीति वर्णनात् प्रत्यनीकालङ्कारः।

मीलितालङ्कारः—

"समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते
निजेनाजन्तुना वाऽपि तन्मीलितमिति स्मृतम्"

यत्र तुल्यवर्णतया एकंवस्तु अन्यस्मिन् लुक्कायितरूपेण तिष्ठति, तत्र मीलितालङ्कारः। यथा—

"अपाङ्गतरलेदृशौ मधुरवक्र वर्णा गिरः,
विलासभरमन्थरा गतिरतीव कान्तं मुखम्।
इति स्फुरितमङ्गके मृगदृशः स्वतोलीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्षते।"

नायिकायाः स्वाभाविकरूपेण दृक्तरलादीनि वर्तन्ते, अपिच नायिकायाः मदमपि स्वतन्त्रम्। परन्तु स्वाभाविकदृगतरलेषु मदं लीयते येन "कृतपदोऽपि मदोदयः न लक्षते" इति कथितम्। अतः मीलितालङ्कारः।

**प्रश्नः ६०- एकावली—स्मरण—भ्रान्तिमान्—प्रतीप—सामान्या-लङ्काराणां लक्षणानि उदाहरणेषु योजयत्।**

उत्तरम्— एकावली—

"स्थाप्यतेऽपोह्यते वाऽपि यथापूर्वंपरं परम्।
विशेषणतया यत्र वस्तु सैकावली द्विधा।"

यत्र पूर्वंवस्तुप्रति उत्तरवस्तु विशेषणरूपेण स्थाप्यते वा निषेधरूपेण योज्यते तत्र एकावली-अलङ्कारः भवति । यथा—

विशेषणरूपेण —

"पुराणि यस्यां सवराङ्गनानि वराङ्गना रूप पुरस्कृताङ्ग्यः
रूपं समुन्मीलित सद्विलास मस्त्रं विलासः कुसुमायुधस्य ।'

अत्र पुराणां विशेषणत्वेन "सवराङ्गनानीति" वरङ्गानानांविशेषणत्वेन "रूपमिति" रूपस्य विशेषणत्वेन "विलास:" विलासस्य विशेषणत्वेन "अस्त्रमिति" वर्णितम् । पूर्वं पूर्वं प्रति उत्तरोत्तरस्य विशेषणत्वेन स्थापनात् एकावली ।

"नतज्जलं यन्न सुचारु पङ्कज" मिति श्लोके तत् जलं न यत्र चारुपङ्कजं नास्तीति निषेधकरणादेकावली ।

स्मरणालङ्कारः—

"यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।" स्मरणम् ।

यत्र पूर्वदृष्टस्य पदार्थस्य स्मरणं सदृशपदार्थयोगेन भवति, तत्र स्मरणालङ्कारः । यथा—

"निम्ननाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः
तद्भवैः कुहरुतैः सुरनार्य्यः स्मारिताः सुरतकण्ठरुतानाम्"

जलक्रीड़ा समये नाभिप्रदेशे ताड़ितजलशब्दं निशम्य सुरतकालिक कण्ठध्वनि स्मरणादत्र स्मरणालङ्कारः ।

भ्रान्तिमान्—

"भ्रान्तिमान्, 'अन्य संवित्तुल्यदर्शने ।"

यत्र प्राकरणिक वस्तु दर्शनानन्तरं तत्तुल्यस्य अप्राकरणिकस्य वस्तुनः ज्ञानं भवति तत्र भ्रान्तिमान् । यथा—

"कपोले मार्जारः पय इति करान् लेढि शशिन
स्तरुच्छिद्र प्रोतान् विसमितिकरी संकलयति ।
रतान्ते तल्पस्थान् हरति वनिताप्यंशुकमिति—
प्रभामत्तश्चन्द्रः जगदिदमहो विप्लवयति ।"

अत्र प्राकरणिकस्य चन्द्रकरस्य दर्शनेन तत्तुल्यस्याप्राकरणिकस्य मार्जारपक्षे क्षीरस्य, करिपक्षे विसस्य, वनितापक्षे वस्त्रस्य भ्रान्त-ज्ञानयोगेन भ्रान्तिमानलङ्कारः ।

प्रतीपालङ्कारः—

"आक्षेप उपमानस्य प्रतीपमुपमेयता
तस्यैव यदिवा कल्प्या तिरस्कार निबन्धनम् ।"

यत्र उपमेयसत्त्वेऽपि "किम्" "कथम्" इति योगेन उपमानस्याक्षेपः भवति, वा उपमानस्य तिरस्कारः क्रियते तत्र प्रतीपालङ्कारः यथा—

"लावण्यौकसि सप्रतापगरिमण्यग्रे सरे त्यागिनां,
देवत्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा ।
इन्दुः किं घटितः किमेषविहितः पूषाकिमुत्पादितं,
चिन्तारत्नमदो मुधैवकिममी सृष्टाः कुलक्ष्माभृतः ।"

अत्र लावण्यादिपरिपूरितस्योराजरूपस्यउपमेयस्य विद्यमानत्वे विधिना कथमिन्दुः सूर्य्य-चिन्तामणिरत्न-कुलपर्वतादयः उपमानाः सृष्टाः । इति कथनेन उपमानानां वैफल्यात् प्रथमप्रतीपालङ्कारः ।

सामान्यालङ्कारः—

"प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया
ऐकात्म्यं बध्यते योगात् तत्सामान्यमितिस्मृतम् ।"

यत्र तुल्याकारयोगात् पृथग्पदार्थयोरैक्यप्रतीतिर्भवति, तत्र सामान्यालङ्कारः । यथा—

"मलयजरसविलिप्ततनवः नवहारलताविभूषिताः ।
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।
शशभृतिविततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः ।"

चन्द्रकरा धवलाः । स्वशरीरे धवलविभूषणं परिगृह्य अभिसारिकाः प्रियगृहं प्रयान्ति । धवलभूषणानामासां चन्द्रकिरणयोगात् गमने बाधाऽपि नागच्छति । चन्द्रकिरणैः अभिसारिकाणां साम्यप्रतिपादनेन सामान्यालङ्कारः ।

**प्रश्नः ६१- विशेष-तद्गुणातद्गुण-व्याघात-संसृष्टि-संकराल-ङ्काराणां लक्षणसाधुता प्रतिपाद्या ।**

उत्तरम्— विशेषः—

"विनाप्रसिद्धमाधारमाधेयस्य व्यवस्थितिः
एकात्मा युगपद्वृत्तिरेकस्यानेक गोचरा ।
अन्यत् प्रकुर्वतः कार्य्यमशक्तस्यान्य वस्तुनः
तथैव करणञ्चेति विशेषस्त्रिविधः स्मृतः ।"

यत्र प्रसिद्धाश्रयं विना आश्रितस्यावस्थितिस्तत्र एकविधः विशेषः। यत्र एकस्यवस्तुनः युगपदेव (समकालम्) अनेकेषु सम्बन्धः भवति तत्र द्वितीयः विशेषः। यत्र एकं कार्य्यं प्रति उद्यमशीलः कर्ता तेनैव यत्नेन अशक्यस्य कार्य्यस्य संपादनं अपि करोति तत्र तृतीयविशेषः। अत्र केवलं प्रथमविशेषोः दीयते। यथा—

"दिवमप्युपजातानामाकल्पमनल्प गुणगणा येषाम्
रमयन्ति जगन्ति गिरः कथमिह कवयो न ते वन्द्याः।"

मरणानन्तरमपि कवीनां रचना (वाण्यः) कल्पक्षयं यावत् जगज्जनान् रमयन्ति। अतः कवयः वन्द्याः। एतद् वर्णनाप्रसङ्गे कविरूपमाधारं विना आधेय भूतानां तद्वचनानां वर्णनात् प्रथमविशेषः। एवमन्यौ ज्ञेयौ।

तद्गुणः—

'स्वमुत्सृज्य गुणं योगादत्युज्ज्वल गुणस्य यत्
वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः"

यत्र अल्पोज्ज्वलवस्तु अत्युज्ज्वलवस्तु संपर्कात् स्वकीयं गुणं विहाय तस्यगुणमाहरति तत्र तद्गुणालङ्कारः। यथा—

"विभिन्नवर्णा गरुडाग्रजेन सूर्यस्यरथ्याः परितः स्फुरन्त्या
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः।"

"अरुण प्रभावात् तद्वर्णीभूताः रथ्यश्वाः जाताः" इति कथनेन एकस्तद् गुणालङ्कारः। पुनश्च "अरुणवर्णीभूताः अश्वाः करीरकान्त्या हरिद्वर्णतामापुः" इति कथनेन अपरोऽपि तद्गुणालङ्कारः।

अतद्गुणः—

"तद्रूपाननुहारश्चेदस्य तत्स्यादतद्गुणः।"

यत्र न्युनकान्तियुक्तपदार्थस्य समीपे अत्युज्जलकान्तियुक्तपदार्थे विद्यमानेऽपि न्युनकान्तियुक्तपदार्थेन उज्जलकान्तिः न गृह्यते तत्र अतद्गुणालङ्कारः भवति। यथा—

"धवलोऽसि यद्यपि सुन्दर! तथापि त्वया मम रञ्जितं हृदयम्
रागभरितेऽपि हृदये सुभग! निहितो न रक्तोऽसि।"

अस्य श्लोकस्य उत्तरार्धे अतद्गुणालङ्कारः। नायिका कथयति "अनुरागेण अहं रक्ता (रक्तवर्णयुक्ता) ममहृदये स्थापितोऽपि त्वं न रक्तोऽसि अर्थात् मां प्रतित्वं नानुरागी भवसि" रक्तवर्णहृदये निहितस्त्वं न रक्तवर्णःभवसीति कथनेन नायकः स्वगुणं विहाय नायिका गुणं नाहरतीत्यर्थः प्रकाशीभवति। अतः अतद्गुणालङ्कारः।

व्याघातः—

"यद् यथा साधितं केनाप्यपरेणतदन्यथा
तथैव यत् विधीयेत स व्याघात इति स्मृतः।"

येन उपायेन एकस्य वस्तुनः विनाशः भवति, यदि तेन पुनः तस्य उत्कर्षः सम्भवेत् तर्हि तत्र व्याघातनामालङ्कारः। यथा—

"दृशादग्धं मनसिजं जीवयन्ति दृशैव याः
विरुपाक्षस्य जयिनी स्ता स्तुमो वामलोचनाः"

अत्र श्लोके कविः शिवस्य विजेत्रीभूतानायिकाः स्यौति। शिवः येन नयनेन कन्दर्पस्य विनाशं चकार, तेनैव नयनेन नायिकाः (कटाक्षपातेन)

पुनः पुरुषाणां कामं जनयन्ति। येन नयनेन कामः मारितः तेन नयनेन तस्य जननात् उत्कर्षो वर्णितः। अतः व्याघातालङ्कारः।

संसृष्टिः— यथा नृत्यगीतवाद्येषु एकस्य प्रयोगे यावान् आनन्दो मिलति ततोऽप्यधिकतरमानन्दोलभ्यते यदि त्रयाणां सम्मेलनं भवति। तथा पूर्वोक्तानामलङ्काराणां मिथः मिलनेन चमत्कारो जायते पाठकानाम्। एतदलङ्कारमिलने द्वयीगतिः निरपेक्षत्वेनापेक्षत्वेनच। यदि निरपेक्षत्वेनालङ्काराणां मिथः मिलनं भवति तर्हि संसृष्टिः। अतः मम्मटेन लिखितम्—"सेष्टासंसृष्टिरेतेषां भेदेन यदिहस्थितिः" अर्थात् यत्र भेदेन (श्लोकस्य वाक्यस्य वा एकस्मिन् भागे एकः अलङ्कारः भागान्तरे अन्यः एकः) अलङ्कारस्थितिस्तत्र संसृष्टिः। संसृष्टिः शब्दालङ्कारमिश्रणेन, अर्थालङ्कारमिश्रणेन, उभयोर्वा मिश्रणेन सम्भवति। अत्र तिलतण्डुलन्यायः उन्नेयः। केवलं शब्दालङ्कार मिश्रणेन कथं संसृष्टि र्भवति, तदुदाह्रियते। यथा—

"वदनसौरभलोभपरिभ्रमद् भ्रमरसंभ्रमसंभृतशोभया।
चलितयाविदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यथा।

अस्य श्लोकस्य प्रथमार्धे "भ"कारानुप्रासः। तृतीयपादे "ल"कारानुप्रासः। चतुर्थचरणे "लकलोलकलो" इति यमकम्। अनुप्रास यमकयोः शब्दालङ्कारान्तर्गतत्वेन च भिन्नस्थानेषु स्थितित्वेन संसृष्टिः।

संकरः— यत्र अलङ्काराणां परस्परसापेक्षत्वेनस्थितिः तत्र संकरालङ्कारः। यथा— नीरमाश्रित्यक्षीरस्यात्मलाभः जायते तथा श्लोके वाक्ये वा एकस्यालङ्कारस्यात्मलाभः यदि अन्यसाहाय्येन भवति

तर्हि तत्र संकरालङ्कारः भवति। स च त्रिविधः। १- अङ्गाङ्गित्वेन, २- संदेहास्पदत्वेन, ३- एकपदगतत्वेन। आद्यस्यलक्षणम्— यथा "अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः।" यत्र पूर्वोक्तालङ्काराणां अस्वतन्त्रतयास्थितिः तथा अङ्गाङ्गित्वम् (उपकार्योपकारकत्वम्) तत्र अङ्गाङ्गिभावरूपः सङ्करः। यथा—

"आत्तेसीमन्तरत्ने मरकतिनिहृते हेमताटङ्कपत्रे
लुप्तायांमेखलायां झटितिमणितुलाकोटियुग्मे गृहीते।
शोणंविम्बोष्ठकान्त्यात्वदरिमृगदृशामित्वरीणामरण्ये
राजन्गुञ्जाफलानां स्रजइतिशवरा नैवहारं हरन्ति।"

अत्र स्त्रीणां सर्वाभरणानि गृहीतानि। कण्ठदेशे केवलं हारः विद्यते। असौ स्वभावतः शुभ्रवर्णः। परन्तु विम्वोष्ठ कान्त्या असौ रक्तवर्णतामेति। येन गुञ्जाफलभ्रान्तिः भवति (गुञ्जाफलम् = "काइँच" इति उत्कलभाषायाम्) अत्र हारस्य स्ववर्णं विहाय रक्तवर्णधारणात् तद्गुणालङ्कार अपिच "गुञ्जाफलानां स्रज" इति भ्रान्तिमानलङ्कारः। तद्गुणमपेक्ष्यभ्रान्तिमतः आत्मलाभयोगात् अङ्गाङ्गिभावसङ्करः।

संदेहसंकरः—

"एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः"

यत्रालङ्कार ग्रहणे साधक प्रमाणं (सहायकप्रमाणम्) वाधकप्रमाणं वा निश्चयतयानोपलभ्यते तत्र संदेहयोगात् संदेह संकरः यथा—

"यथा गभीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः
तथा किं विधिना एष सरसपानीयोजलनिधिर्न कृतः।"

अत्र गभीरादिश्लिष्टविशेषणयोगेन समासोक्तिनामालङ्कारः।

प्रकाशिका—

**नेत्रमणि रथ**

प्रथम संस्करणम्—

१०००,

१९८४ मसिहा

प्राप्तिस्थानम्—

सद्ग्रन्थनिकेतनम्

श्रीमन्दिरम्, पुरी, ७५२००१

ओड़िशा

योगायोगः—

**सूर्यमणिरथः**

जे. भि. के. महाविद्यालयः

पुरी, ७५२००१

ओड़िशा

Price— Rs. 7-00

मुद्रण — श्रीनारायणप्रेस, पु